'पणे'त्यादि, पञ्च संलेखनायाम् अतीचारा इति सर्वत्र योज्यम् , पंचदश 'कम्म' त्ति कर्मादानानि, ज्ञानादिषु–ज्ञान-दर्शन-चारित्रेषु अष्टौ प्रत्येकमित्यष्टकत्रयस्य मीलने चतुर्विंशतिः भवन्ति, त्रिंशतिक्षिप्तेषु जाताश्चत्वारिंशत् ४४, द्वादश तपसि–तपोविषये, लुप्तसप्तमीकमिदं द्रष्टव्यम् , चतुश्चत्वारिंशत्मध्ये द्वादशसु क्षिप्तेषु षट्पञ्चाशज्जातानि, वीर्यत्रिके–मनो-वचन-कायवीर्यलक्षणे, अत्र सप्तम्यर्थे प्रथमा, वीर्यत्रिके क्षिप्ते एकोनषष्टिः जाताः, तथा सम्यक्त्वे पञ्चातीचाराः, तथा व्रतानि–अणुव्रतादीनि द्वादश, तेषु प्रत्येकं पञ्च पञ्चातीचारा इति व्रतेषु षष्टिः, एते च सर्वे मिलिताश्चतुर्विंशत्यधिकं शतम् । २६३॥

इदानीं क्रमेणैव सर्वानेतान् स्वयमेव व्याचष्टे—'इहपरलोए'त्यादि, आशंसनमाशंसा—अभिलाषः तस्याः प्रयोगो–व्यापारणं करणमाशंसाप्रयोगः, आशंसैव वा प्रयोगो–व्यापार आशंसाप्रयोगः, तत्र इह–अस्मिन् प्रज्ञापकमनुष्यापेक्षया मानुषत्वपर्याये यो वर्तते लोकः–प्राणिवर्गः स इहलोकः, तद्व्यतिरिक्तस्तु परलोकः, तत्रेहलोकं प्रति आशंसाप्रयोगो यथा–अनेनाऽऽराधनादिकष्टेन मृतः सन् मत्तद्विपघटोद्भटतरलतरतुरंगतुरङ्गराजीविराजमानसुन्दरमन्दुराशतकान्तः काञ्चननिस्सपत्नरत्नोद्दण्डमणिखण्डप्रमुखमहासमृद्धिसम्भारविनिर्जितवैश्रमणकोशः क्षितिपतिर्विशुद्धबुद्धिरमात्यो वा ज्येष्ठः श्रेष्ठी वा जन्मान्तरे अहं भवेयमित्येवं नरपत्यादिसमृद्धिप्रार्थना १, तथा परलोकाशंसाप्रयोगः–कमनीयकामिनीनयननलिननिपीयमानलसल्लावण्यपुण्यपीयूषः सुरपतिरहं स्यां देवो वा इत्यादिप्रार्थना २, तथा मरणं प्रत्याशंसाप्रयोगः तथाविधप्रान्तक्षेत्रप्रतिपन्नानशनो लोकैः क्रियमाणप्रभावनाकारिपूजाद्यभावे गाढतररोगपीडायां वा यद्यहं झटित्येव म्रिये तदा भव्यं भवेदिति प्रार्थना ३, तथा जीवितं–प्राणधारणं तदाशंसायाः–तदभिलापस्य प्रयोगो,

यथा–बहुकालमहं जीवेयमिति, अयं हि कृतानशनः कश्चित् कर्पूर-श्रीचन्दन-वस्त्र-माल्य-धवलरासकादिविशिष्टपूजादर्शनाद् बहुपरिवारावलोकनान्निरन्तरागच्छदतुच्छजननिकरेण धन्योऽयं पुण्यवानित्यादिक्रियमाणश्लाघाश्रवणात सङ्घादिधार्मिकजनोपबृंहणाच्चैवं मन्यते, यथा–प्रतिपन्नानशनस्यापि चिरतरं जीवितमेव मे श्रेयः, यत एवंविधा मदुद्देशेन शासनप्रभावना विभूतिश्च वर्तत इति ४, तथा कामौ–शब्द-रूपे भोगाः–गन्ध-रस-स्पर्शास्तेषामाशंसा, यद्यनेन कष्टाराधनाविधिना मम जन्मान्तरे विशिष्टाः कामभोगाः सम्पद्यन्ते तदा भव्यं भवतीत्यादिविकल्परूपाः, एते मरणान्ते पञ्चातीचाराः ५, एतैः समयविधिकृताऽप्याराधना दूष्यत इति न कर्तव्या एवंविधा आशंसाः, यत उक्तम्—

"आशंसया विनिर्मुक्तोऽनुष्ठानं सर्वमाचरेत् । मोक्षे भवे च सर्वत्र, निःस्पृहो मुनिसत्तमः ॥१॥"

'पन्नरस कम्म'त्ति व्याख्यायते, तत्राह—

भाडी[1] फोडी[2] साडी[3] वण[4]अंगार[5]स्स रूवकम्माइं ।
वाणिज्जाणि अ विस[6]-लक्ख[7]-दंत[8]-रस[9]-केस[10]विसयाणि ॥२६५॥
दवदाण[11] जंतवाहण[12] निल्लंछण[13] असइपोस[14]सहियाणि ।
सजलासयसोसा[15]णि अ कम्माइं हवंति पन्नरस ॥२६६॥

'भाडी'त्यादि गाथाद्वयम्, तत्र भाटककर्म यत् स्वकीयगन्त्र्यादिना परकीयभाण्डं भाटकेन वहति अन्येषां वा बलीवर्द-शकटादीन् भाटकेनैवार्पयति, यदाहुः—

"¹नियएणुवगरणेणं परकीयं भाडएण जो वहइ । तं भाडकम्ममहवा वसहाइसमप्पणेऽन्नेसिं ॥१॥" इति ।

'फोडि'त्ति स्फोटनकर्म—वापी-कूप-तडागादिखननं यद्वा हलकुद्दालादिना भूमिविदारणं पाषाणादिघट्टनं वा, यवादिधान्यानां सक्त्वादिकरणेन विक्रयो वा, यदुक्तम्—

"²जव-चणया-गोहुम-मुग्ग-मास-करडिप्पभिइधन्नाणं । सत्तुय-दालि-कणिक्का-तंडुलकरणाइं फोडणयं ॥१॥

अहवा फोडीकम्मं सीरेणं भूमिफोडणं जं तु । उण्डत्तणयं च तहा तहा य सिलकुट्टयत्तं चे ॥२॥ ति"

'साडी'ति शकटकर्म, शकटानां तदङ्गानां च चक्रोर्ध्वादीनां स्वयं परेण वा वृत्तिनिमित्तं निष्पादनं विक्रयो वाहनं वा, यदाहुः—

"शकटानां तदङ्गानां, घटनं खेटनं तथा । विक्रयश्चेति शकटजीविका परिकीर्त्तिता ॥१॥" [योगशास्त्र ३।१०४] ३ ॥

'वण'त्ति वनकर्म-यत् छिन्नानामच्छिन्नानां च तरुखण्डानां पत्राणां पुष्पाणां फलानां च विक्रयणं वृत्तिकृते तद्वनकर्म, यच्चात्र स्फोटकर्मत्वेनोक्तं मुद्गादिकणानां घरट्टादिना द्वैधीकरणं दाल्यादिरूपं गोधूमादीनां च घरट्ट-शिलापुत्रकादिना चूर्णीकरणं पिष्टकादिरूपं तदपि वनकर्मेति केचिन्मन्यन्ते, यदाहुः—

१ निजकेनोपकरणेन परकीयं भाटकेन यो वहति । तत् भाटककर्म अथवा वृषभादिसमर्पणेऽन्येषाम् ॥१॥

२ यव-चणक-गोधूम-मुद्ग-माष करटिप्रभृतिधान्यानाम् । सक्तुक-दालि-कणिक्का-तन्दुलकरणानि स्फोटनकर्म ॥१॥ अथवा स्फोटनकर्म हलेन भूमिस्फोटनं यत्तु । सूडनं च तथा तथा च शैलकुट्टकत्वं च ॥२॥

"छिन्नाच्छिन्नवनपत्रप्रसूनफल[1]विक्रयः। कणानां दलनात्पेषात्, वृत्तिश्च वनजीविका ॥१॥" [यो. शा. ३।१०३]४ ॥

'अंगार'त्ति अङ्गारकर्म—यदङ्गारकरणपूर्वकं तद्विक्रयः, एतच्चोपलक्षणम् अन्यदपि यदग्निसमारम्भपूर्वकमिष्टका-भाण्डादिपाकभ्राष्ट्रादिकरणेन जीवनं तदप्यङ्गारकर्म, यदाहुः—"[2]अङ्गारविकयं इट्टयाणं कुंभार-लोहगाराणं। सुन्नार-भाडभुंजाइयाण कम्मं तमिंगालं ॥१॥"

अतिचारता चैतेषां कृततत्प्रत्याख्यानस्य अनाभोगादिना अत्रैव प्रवृत्तेः, एवमन्यत्रापीति, एतत्स्वरूपाणि कर्माणि पञ्च, तथा वाणिज्यानि—क्रय-विक्रयस्वरूपाणि, चः समुच्चये, विष-लाक्षा-दन्त-रस-केश-विषयाणि, तत्र विषवाणिज्यम्, विषं—शृङ्गिकादि तच्चोपलक्षणमन्येषां जीवघातहेतूनामुपविषागामस्त्रादीनां च तेषां विक्रयः, यदाहुः—

"[3]विसवाणिज्जं भन्नइ विस-लोह-प्पाणहणणविक्किणणं। धणुह सर-खग्ग-छुरिआ-परसुय-कुद्दालियाईणं ॥१॥"

तथा लाक्षावाणिज्यं बहुजीवजालकस्थानलाक्षादि विक्रयः, यदवाचि—

"[4]लक्खा-धायइ-गुलिया-मणसिल-हरिआल-वज्जलेवाणं। विक्किणणं लक्खवणिज्जं तु यरीसकूडमाईणं॥१॥"

---

१ विक्रयात् कण नां दलनोत्पेषात्—मु०।

२ अङ्गारविक्रय इष्टकानां कुम्भकारलोहकाराणां। सुवर्णकारभ्राष्ट्रभुञ्जकादीनां कर्म तदङ्गारकर्म ॥१॥

३ विषवाणिज्य भण्यते विषलोहप्राणघातकविक्रयणम्। धनुः-शर-खड्ग-क्षुरिका-पर्शु कुद्दालिकादीनाम् ॥१॥

४ लाक्षाधातकीगुलिकामनः-शिलहरितालवज्रलेपानाम्। विक्रयणं लाक्षावाणिज्यं तूरीकूटादीनाम् ॥१॥

तथा दन्तवाणिज्यं यत्र प्रथमत एव पुलिन्द्रादीनां हस्तिदन्त-शङ्ख पूतिश-चर्म-केशादीनामानयन-निमित्तं मूल्यं ददाति आकरे वा गत्वा स्वयं क्रीणाति, ततस्ते वनादौ गत्वा हस्त्यादीन् तदर्थं घ्नन्ति तद्विक्रयपूर्वं यदाजीवनं तद्दन्तवाणिज्यम्, यदवोचन्—

“ [1]नह-दंत-चमर खल्ला-भेरि-कवड्डा य सिप्पि-संखा य। कत्थूरिय-पूइममाइयं च इह दंतवाणिज्जं॥१॥”

तथा रसवाणिज्यं मद्यादिविक्रयः, यदभ्यधायि—

“ [2]महु-मज्ज-मंस-मक्खण चउण्ह विगईण जमिह विक्किणणं । रसवाणिज्जं तह दुद्ध-तिल्ल-घय-दहिअपभिईणं ॥१॥” ॥९॥

तथा केशवाणिज्यं यत्र दासीदासहस्त्यश्वगवोष्ट्रमहिषवालेयादिजीवान् गृहीत्वा तत्रान्यत्र वा विक्रीणीते जीविकानिमित्तं तत् केशवाणिज्यम्, यदाहुः—

“[3]मणुयाणं तिरियाणं विक्किणणं इत्थ अन्नदेसे वा। केसवणिज्जं भन्नइ गोगद्दहअस्समाईणं॥१॥” ॥१०॥

सजीवानां विक्रये केशवाणिज्यम्, अजीवानां तु जीवाङ्गानां विक्रये दन्तवाणिज्यमिति विवेकः॥२६४॥

तथा दवदानं यन्त्रवाहनं निर्लाञ्छनम्, असतीपोषः, एतैः सहितानि, सह जलाशयशोषेण वर्तन्ते सजलाशयशोषाणि, चः समुच्चये, कर्माणि भवन्ति पञ्चदश, तत्र 'दवदानं' दवस्य—दवाग्नेस्तृणादिदहननि-

---

१ नख-दन्त-चामर-खल्ला-भेरी-कपर्दकाः शुक्तिशङ्खाश्च। कस्तूरिका-पूतिशादिकं चेह दन्तवाणिज्यम्॥१॥

२ मधु-मद्य-मांस-म्रक्षणानां चतसृणा विकृतीनां यदिह विक्रयणम्। रसवाणिज्यं तथा दुग्ध-तैल-घृत-दधिप्रभृतीनाम् १॥

३ मनुजानां तिरश्चां विक्रयणमत्रान्यदेशे वा। केशवाणिज्य मण्यते गो-गर्दभाश्वादीनाम्॥१॥

मित्तं दानं–वितरणं दवदानम्, तच्च द्विधा भवति–व्यसनात्–फलनिरपेक्षप्रवृत्तिरूपात्, यथा वनेचरा एवमेव तृणादावग्निं ज्वालयन्ति पुण्यबुद्ध्या वा–यथा मदीयमरणसमये इयन्तो मम श्रेयोऽर्थं धर्मदीपोत्सवाः करणीया इति, अथवा जीर्णतृणदाहे सति नवतृणाङ्कुरोद्भेदाद्गावश्चरन्तीति, क्षेत्रे वा शस्यसम्पत्तिनिमित्तमग्निं ज्वालयन्तीति, यदुक्तम्–" [1]वणदवदाणमरण्णे दव्वग्गिदाणं तु जीववहजणयं।" ॥११॥

'यन्त्रवाहन'मिति तिलेक्षु-सर्षपैरण्डफलादिपीलननिमित्तं तत्तद्यन्त्राणां-वाणकादीनाम् अरघट्टादिजलयन्त्राणां च वाहनं-व्यापारणं शिलोदूखलमुशलादीनां विक्रयणं वा यन्त्रवाहनम् यन्त्रपीलनकर्मेत्यर्थः, उक्तं च–"[2]सिल-उक्खल-मुसल-घरट्ट-कंकयाईण जमिह विक्किणणं। उच्छुत्तिलपीलणं वा तं बिंती जंतपीलणयं ॥१॥"

एतच्च पीलनीयतिलादिक्षोदात्तद्गतजीववधाच्च सदोषम्, यतो लौकिका अपि भाषन्ते–"[3]दशसूनासमश्चक्री, दशचक्रिसमो ध्वजः। दशध्वजसमा वेश्या, दशवेश्यासमो नृपः ॥१॥" १२ इति।

'निर्लाञ्छन'मिति नितरां लाञ्छनम्–अङ्गावयवच्छेदस्तेन कर्म–जीविका निर्लाञ्छनकर्म, तत्र गो महिषोष्ट्रादीनां नासावेधो गवाश्वादीनामङ्कनं तेषामेव वर्धितकीकरणं करभाणां पृष्ठगालनं गवां च कर्णकम्बलच्छेदनादिकमिति, यदाहुः—"नासावेधोऽङ्कनं मुष्कच्छेदनं पृष्ठगालनम्। कर्णकम्बलविच्छेदो, निर्लाञ्छनमुदीरितम् ॥१।" [योगशास्त्र ३।११२] १३ इति ॥

१ अरण्ये वनदवदानं दवाग्निदानं जीववधजनकम् ॥१॥
२ शिलोदूखलमुशलघरट्टकंकटादीनां यदिह विक्रयणम्। इक्षुतिलपीडनं वा तत् ब्रुवते यन्त्रपीडनकर्म ॥१॥
३ सूनेति 'चूलो-घण्टी' त्यादीनि हिंसास्थानानि, चक्रीति भाषायां तेली, ध्वज इति भाषायां कलालः दशसूना समश्चक्रं०-सं॰ यो॰ टी॰ (३।१११) ॥

'असतीपोष' इति असत्यो–दुःशीलास्तासां दासी-सारिकादीनां पोषणं पोषोऽसतीपोषः, तत्र लिङ्ग–मतन्त्रं तेन शुक-श्वादीनामपि पुंसां पोषणमसतीपोषः, यदवाचि—"*मज्जार-मोर मक्कड कुक्कुड सालहीअकुक्कुराईणं । दुट्ठित्थिनपुंसाईण पोसणं असइपोसणयं ॥१॥"इति एषां च पोषणं पापहेतुरेवेति १४ ॥

तथा 'जलाशयशोषो' जलाशयानां–सरःप्रभृतीनां शोषणमिति, तदुक्तम्--

"★सरदहतलायसोसो बहुजलयरजीवखयगारी" १५ ॥ एतानि च पञ्चदशापि कर्मादानानि प्रतिषिद्ध-षड्विधजीववधादिमहासावद्यहेतुत्वाद्वर्जनीयानि, उपलक्षणं चैतद्बहुसावद्यानां कर्मणामेवञ्जातियानां न पुनः परिगणनमिदमिति ॥२६६॥ 'नाणाइअट्ठ'त्ति ज्ञान-दर्शन चारित्राणां प्रत्येकमष्टावतीचारा–मालिन्य-लक्षणाः, ते च प्रतिपक्षे आचारलक्षणे ज्ञाते सति सुज्ञाना भवन्ति इत्यतस्तावद् ज्ञानाचारान् आह–

काले[1] विणए[2] बहुमाणो[3]वहाणे[4] तहा अनिण्हवणे[5] ।
वंजण[6] अत्थ[7] तदुभए[8] अट्ठविहो नाणमायारो ॥२६७॥
निस्संकिय[1] निक्कंखिय[2] निव्वितिगिच्छा[3] अमूढदिट्ठी[4] य ।
उववूह[5]-थिरीकरणे[6] वच्छल्ल[7]-पभावणे[8] अट्ठ ॥२६८॥
पणिहाणजोगजुत्तो पंचहिं समिईहिं तीहिं गुत्तीहिं ।
चरणायारो विवरीययाई तिण्हंपि अइयारा ॥२६९॥





*मार्जारमयूरमर्कटकुर्कुटशुककुर्कुरादीनाम् । दुष्टस्त्रीनपुंसकादीनां पोषणमसतीपोषणम् ॥१॥ ★ सरो-द्रह-तटाकशोषो बहुजलचरजीवक्षयकारी ।

❀ 'काले'इत्यादि, काले–कालविषये ज्ञानाचारो भवतीति सर्वत्र सम्बन्धः, तत्र यो यस्याङ्गप्रविष्टादेः श्रुतस्य काल उक्तस्तस्य तस्मिन्नेव स्वाध्यायः कार्यो नान्यदा प्रत्यवायसम्भवात्, दृश्यते च लोकेऽपि कृष्यादेः कालकरणे फलं विपर्यये तु विपर्यय इति, यत उक्तम्–

"★ कालंमि कीरमाणं किसिकम्मं बहुफलं जहा होइ। इय सव्वावि य किरिया नियनियकालंमि विन्नेया ॥१॥" इति।

तथा 'विणए'त्ति विनये–विनयविषये, ज्ञानस्य ज्ञानिनां ज्ञानसाधनानां च-पुस्तकादीनामुपचाररूपः, यतो विनयेन–आसनदानाऽऽदेशकरणादिना पठनीयं न पुनरविनयेन–आसनदानाद्यकरणेन २ । तथा 'बहुमाणे'त्ति बहुमानः–प्रीतिस्तद्विषये, यतो बहुमानेनैव-आन्तरचित्तप्रमोदलक्षणेन पठनादि विधेयं न पुनर्बहुमानाभावेनेति ३ । तथा 'उवहाणे'त्ति, उप–समीपे + धीयते–ध्रियते सूत्रादिकं येन तपसा तदुपधानं तपोविशेषः तद्विषये, यतो यद्यस्य सूत्रस्य अध्ययनोद्देशकादेस्तप उक्तं तत्तपः कृत्वैव तस्य पाठादि विधेयं नान्यथेति ४ । तथा '[तहा]अनिण्हवणे'त्ति, तथाशब्दः समुच्चये, निह्नवनमपलपनं न निह्नवनमनिह्नवनं तद्विषये, यतोऽनिह्नवेनैव पाठादि सूत्रादेर्विधेयं न पुनर्मानादिवशतः आत्मनो लाघवाद्याशङ्कया श्रुतगुरूणां श्रुतस्य वाऽपलापेनेति ५ । तथा 'वंजण-अत्थ-तदुभये' इति व्यञ्जनानि–ककारादीनि, अर्थः–अभिधेयम्, तदुभयं च–व्यञ्जनार्थयोरुभयम्, ततः समाहारद्वन्द्वः, × तद्विषये, कोऽर्थः ?–व्यञ्जनविषयेऽर्थविषये तदुभय-

---

❀ 'काले'त्यादि–मु.॥

★ काले क्रियमाण कृषिकर्म बहुफलं यथा भवति । एवं सर्वाऽपि च क्रिया निजनिजकाले विज्ञेया ॥१॥

+ विधीयते-क्रियते-जे. ॥ × तद्विषये-मु० नास्ति ॥

विषये च ज्ञानाचारत्रयं भवति, एतत्त्रयानन्यथाकरणेन सम्यगुपयोगेन च यतः सूत्रादि पठनीयं नान्यथा ६-७-८, अत्र व्यञ्जनग्रहणमुपलक्षणं स्वरा अपि द्रष्टव्याः । एवमष्टविधः—अष्टप्रकारो ज्ञानस्य—श्रुतज्ञानस्याचारो—ज्ञानाराधनतत्पराणां व्यवहार इति ॥२६७॥

अथ **दर्शनाचारभेदानाह—'निस्संकिये'**त्यादि, शङ्कितं शङ्का—सन्देहस्तस्याभावो निःशङ्कितं दर्शनस्य--सम्यक्त्वस्याचारः १ । इत्येवमन्यत्रापि, तथा काङ्क्षितं काङ्क्षा—अन्यान्यदर्शनग्रहः तदभावो निष्काङ्क्षितम् २ । तथा विचिकित्सा- मतिविभ्रमः युक्तयागमोपपन्नेऽप्यर्थे फलं प्रति सम्मोहः, तदभावो निर्विचिकित्सम्, यद्वा विद्वज्जुगुप्सा-मलमलिना एते इत्यादिसाधुजुगुप्सा तदभावो निर्विद्वज्जुगुप्सम्, तत एतेषां द्वन्द्वः, पुँल्लिङ्गनिर्देशश्च प्राकृतत्वात् ३ । तथा अमूढा—तपो-विद्यातिशयादिकुतीर्थिकर्द्धिदर्शनेऽप्यमोहा—स्वभावादविचलिता सा च सा दृष्टिश्च—सम्यग्दर्शनम् अमूढदृष्टिः, अथवा निर्गताः शङ्कितादिभ्यो ये ते निःशङ्कित-निष्काङ्क्षित-निर्विचिकित्सा जीवाः, अमूढा दृष्टिरस्येत्येवममूढदृष्टिश्च जीव एव, तत एते धर्म-धर्मिणोरभेदोपचाराद्दर्शनाचारभेदा भवन्तीति ४ । तथा उपबृंहणं उपबृंहा—समानधार्मिकाणां क्षपणावैयावृत्त्यादिसद्गुणप्रशंसनेन तत्तद्गुणवृद्धिकरणम् ५ । तथा स्थिरीकरणं तु धर्माद्विषीदतां तत्रैव चाटुवचनचातुर्यादवस्थापनम्, उपबृंहा च स्थिरीकरणं च उपबृंहा-स्थिरीकरणे ६ । तथा वात्सल्यं च प्रभावना च वात्सल्य-प्रभावने, तत्र वात्सल्यं—समानदेव-गुरु-धर्माणां भोजन-निवसन-दानोपकारादिभिः सम्माननम् ७ । प्रभावना—धर्मकथा—प्रतिवादिनिर्जय-दुष्करतपश्चरण-करणादिभिर्जिनप्रवचनप्रकाशनम्, यद्यपि च

प्रवचनं शाश्वतत्वात् तीर्थंकरभाषितत्वाद्वा सुरासुरनमस्कृतत्वाद्वा स्वयमेव दीप्यते तथापि दर्शनशुद्धिमात्मनोऽभीप्सुर्यो येन गुणेनाधिकः स तेन तत्प्रवचनं प्रभावयति, यथा भगवदार्यवज्रस्वामिप्रभृतिक इति ८ ॥२६८॥ एतेऽष्टौ दर्शनाचाराः ।

साम्प्रतं चारित्राचारानाह--'पणिहाणजोगे'त्यादि, प्रणिधानं-चेतःस्वास्थ्यं तत्प्रधाना योगा—व्यापाराः प्रणिधानयोगाः तैर्युक्तः—समन्वितो यः साधुः पञ्चभिः समितिभिस्तिसृभिर्गुप्तिभिः कृत्वा, अथवा 'सुपां सुपो भवन्ती'ति वचनात् सप्तम्यर्थे तृतीया, ततः पञ्चसु समितिषु तिसृषु गुप्तिषु विषये-एता आश्रित्य प्रणिधानयोगयुक्तो यः स एष चरणाचारः, आचाराचारवतोः कथञ्चिदभेदादिति, ज्ञेय इति शेषः, एतेषां त्रयाणामपि ज्ञानाचारादीनां विपर्यस्ततायाम्-अकालाविनयादौ शङ्कितत्वादौ अप्रणिधानरूपायां च सत्यामतीचाराः—चित्तमालिन्यलक्षणा इति ॥२६९॥

'बारस तव'त्ति व्याख्यातुमाह—

[1] अणसणमूणोअरिआ [2] वित्तीसंखेवणं [3] रसच्चाओ [4] ।
कायकिलेसो [5] संलीणया [6] य बज्झो तवो होइ ॥२७०॥
पायच्छित्तं [1] विणओ [2] वेयावच्चं [3] तहेव सज्झाओ [4] ।
झाणं [5] उस्सग्गोऽवि [6] य अब्भितरओ तवो होइ॥२७१॥[दशवै. निर्युक्ति ४७-४८]

**सम्ममकरणे बारस तवाइयारा तिगं तु विरिअस्स ।**
**मणवयकाया पावपउत्ता विरियतिगअइयारा ॥२७२॥**

'**अणसणे**'त्यादि गाथाद्वयम्, तत्र अश्यत इति अशनं [1]न अशनम् अनशनमाहारत्याग इत्यर्थः, तत्पुनर्द्विधा—इत्वरं यावत्कथिकं च, तत्रेत्वरं—परिमितकालम्, तत्पुनः श्रीमहावीरतीर्थे नमस्कारसहितादि षण्मासान्तम्, श्रीनाभेयतीर्थे संवत्सरपर्यन्तम्, मध्यमतीर्थकरतीर्थे [2]त्वष्टमासान् यावत्, यावत्कथिकं पुनराजन्मभावि, तत्पुनश्चेष्टाभेदोपाधिविशेषतस्त्रिधा, यथा पादपोपगमनम्, इङ्गितमरणम्, भक्तपरिज्ञा चेति, एतेषां त्रयाणामपि स्वरूपं सप्तपञ्चाशदधिकशततमद्वारादवसेयमिति ॥१॥

'**ऊणोअरिय**' त्ति ऊनमुदरम् ऊनोदरं तस्य करणं भावे वुञि ऊनोदरिका, व्युत्पत्तिरेवेयम्, अस्य प्रवृत्तिस्तूनतामात्रे, सा द्विधा—द्रव्यतो भावतश्च, द्रव्यत उपकरण-भक्त-पानविषया, तत्र उपकरणविषयोनोदरिका जिनकल्पिकादीनां तदभ्यासपरायणानां वाऽवबोद्धव्या, न पुनरन्येषाम्, तेषामुपध्यभावे समग्रसंयमपालनाऽभावात्, अथवाऽन्येषामप्यतिरिक्तोपकरणाग्रहणतो भवत्येवोनोदरता, यत उक्तम्—

" [3]जं वट्टइ उवगारे उवगरणं तं च होइ उवगरणं । अइरित्तं अहिगरणं अजओ अजयं परिहरंतो ॥१॥"

इति, 'परिहरंतो'त्ति आसेवमानः 'परिहारो परिभोगो' इति वचनात्, ततोऽयतश्च यत्परिभुञ्जानो भवतीत्यर्थः, भक्तपानोनोदरिका पुनरात्मीयाहारमानपरित्यागतो विज्ञेया, आहारमानं च—

१ तुलना-दशवै हा. टी. (पृ. २६ तः)। अगस्त्यसिंहरचिता चूर्णिः (पृ-१२ तः)॥ २ ० त्वष्टौ मासान्-सं० ॥
३ यद्वर्त्तते उपकारे उपकरणं तदेव भवत्युपकरणम् । अतिरिक्तमधिकरणं अयतोऽयतं भुञ्जन् ॥१॥

"[1]बत्तीसं किर कवला आहारो कुच्छिपूरओ भणिओ। पुरिसस्स महिलिआए अट्ठावीसं भवे कवला ॥१॥ [2]कवलस्स य परिमाणं कुक्कुडिअंडगपमाणमित्तं तु । जं वा अविगियवयणो वयणम्मि छुभिज्ज वीसंतो ॥२॥" इत्यादि।

सा च अल्पाहारादिभेदतः पञ्चविधा भवति, यदाहुः—

"अप्पाहार १ अवड्ढा २ दुभाग ३ पत्ता ४ तहेव किंचूणा ५ ।
अट्ठ दुवालस सोलस चउवीस तहेक्कतीसा य ॥ १ ॥"

अयमत्र भावार्थः--अल्पाहारोनोदरिका नाम एककवलादारभ्य यावदष्टौ कवला इति, अत्र चैककवलमाना जघन्या अष्टकवलमाना पुनरुत्कृष्टा द्व्यादिकवलमानभेदा मध्यमा १। एवं नवभ्यः कवलेभ्य आरभ्य यावद् द्वादश कवलास्तावदपार्धोनोदरिका, अत्रापि नवकवला जघन्या द्वादशकवलोत्कृष्टा शेषा तु मध्यमा २। एवं त्रयोदशभ्य आरभ्य यावत् षोडश कवलाः तावद्विभागोनोदरिका, जघन्यादिभेदत्रयभावना पूर्ववत् ३। एवं सप्तदशभ्य आरभ्य यावत् चतुर्विंशतिः कवलास्तावत् प्राप्तोनोदरिका, *जघन्यादित्रयभावना अत्रापि पूर्ववत् *४। एवं पञ्चविंशतेरारभ्य यावदेकत्रिंशत्कवलास्तावत् किञ्चिदूनोदरिका,

---

१ द्वात्रिंशत किल कवला आहार. कुक्षिपूरको भणितः। पुरुषस्य महीलाया अष्टाविंशतिः कवला भवेयुः ॥१॥
२ कवलस्य च प्रमाणं कुक्कुट्यण्डकप्रमाणमात्रमेव। यद्वा अविकृतवदनो वदने क्षिपेद्विश्वस्तः॥२॥]
❀ ❀ चिह्नद्वयमध्यवर्ती पाठो जे. सं. नास्ति ॥

जघन्यादिभेदत्रयं पूर्ववद्भावनीयम् ५। एवमनेनानुसारेण पानेऽपि भणनीया, तथा स्त्रीणामप्येवं पुरुषानुसारेण द्रष्टव्या, भावत ऊनोदरिका क्रोधादिपरित्यागः, यत उक्तम्–

[1]"कोहाईणमणुदिणं चाओ जिणवयणभावणाओ य। भावेणोणोदरिआ पन्नत्ता वीयराएहिं ॥१॥" ॥२॥

'वित्तीसंखेवणं'ति वर्त्तते अनयेति वृत्तिः–भैक्ष्यं तस्याः सङ्क्षेपणं–सङ्कोचः तच्च गोचराभिग्रहरूपम्, ते च गोचरविषया अभिग्रहा अनेकरूपाः, तद्यथा–द्रव्यतः क्षेत्रतः कालतो भावतश्च, तत्र द्रव्यतो मया अद्य भिक्षायां गतेन लेपकार्याद्येव कुन्ताग्रादिसंस्थितमण्डकादि वा ग्राह्यमित्यादयः, क्षेत्रत एक-द्वि-त्र्यादिगृह-स्वग्राम-परग्राम-पेटार्धपेटादिलब्धं दायकेन देहली-जङ्घयोरन्तर्विधाय वा दत्तं गृहीष्यामीत्यादयः, कालतः पूर्वाह्णादौ सकलभिक्षाचरनिवर्त्तनावसरे वा पर्यटितव्यमित्यादयः, भावतो हसन-गान-रोदनादिक्रियाप्रवृत्तो बद्धो वा यदि प्रतिलाभयिष्यति ततोऽहमादास्ये न त्वन्यथेत्येवमादयः, उक्तं च–

[2]"लेवडमलेवडं वा अमुगं दव्वं च अज्ज घेच्छामि। अमुगेण व दव्वेणं अह दव्वाभिग्गहो नाम॥१॥ [पञ्चवस्तु २९८]। 'अमुगेणं'ति चट्टुक-करोटिकादिना,।

"[3]अट्ठ उ गोयरभूमी एलुयविक्खंभमित्तगहणं च।
[4]सग्गामे परग्गामे एवइअ घरा उ खेत्तंमि ॥२॥ [पञ्चवस्तु २९९]

---

१ क्रोधादीनामनुदिनं त्यागो जिनवचनभावनाश्च। भावेनोनोदरिका प्रज्ञप्ता वीतरागैः ॥१॥
२ लेपकृदलेपकृद्वाऽमुकं वा द्रव्यमद्य ग्रहीष्यामि। अमुकेन वा द्रव्येणैष द्रव्याभिग्रहो नाम ॥१॥
३ अष्टैव गोचरभूमयः एलुकविष्कम्भमात्रग्रहणं च। स्वग्रामे परग्रामे इयन्ति गृहाणि तु क्षेत्रे ॥२॥
४ सग्गामपरग्गामो–मु०। सग्गाम–परग्गामे–दशवै० हा० टी. (पृ. २८A)। (२११) पञ्चवस्तु॥

[1]उज्जुग १ गंतु पच्चागई य २ गोमुत्तिआ ३ पयंगविही ४ ।
पेडा य ५ अद्धपेडा ६ अब्भिंतर ७ बाहिसंबुक्का ॥३॥
[2]काले अभिग्गहो पुण आई मज्झे तहेव अवसाणे । अप्पत्ते सइ काले आई बिति मज्झि तइयंते ॥४॥"
[पञ्चवस्तु ३००–३०१]

प्रतीतभिक्षावेलाया आदौ मध्येऽवसाने च कालविषयोऽभिग्रहः, [3]तथा चाह—"अप्राप्ते सति भिक्षाकाले अटत आदिः-प्रथमः, मध्ये-भिक्षाकाल एवाटतो द्वितीयः, अन्ते-भिक्षाकालावसानेऽटतस्तृतीयोऽभिग्रहः"

" [4]दिन्तगपडिच्छगाणं हवेज्ज सुहुमंपि मा हु अचियत्तं । इइ अप्पत्ते अइए पवत्तणं मा [5]अओ मज्झे ॥१॥
उक्खित्तमाइचरगा भावजुया खलु अभिग्गहा हुंति । गायंतो व रुयन्तो जं देइ निसन्नमाइ वा ॥२॥"
[पञ्चवस्तु ३०२–३]

'उक्खित्तमाइचरग'त्ति उत्क्षिप्तादिचराः, उत्क्षिप्ते भाजनात् पिण्डे चरति—गच्छति यः स उत्क्षिप्तचरः, एवं निक्षिप्ते भाजनादाविति भावनीयम् ,

---

१ ऋजु गत्वाप्रत्यागतिश्च गोमूत्रिका पतङ्गवीथिः । पेटा अर्धपेटा अभ्यन्तरशम्बूका बाह्यशम्बूका ॥३॥
२ कालेऽभिग्रहः पुनरादौ मध्ये तथैवावसाने । अप्राप्ते सतिकाले आद्यः, द्वितीयो मध्ये, तृतीयोऽन्त्ये ॥४॥
३ तथा च अप्राप्ते-सं० ॥ तु० पञ्चवस्तुटीका (३०१) ॥
४ ददत्प्रतीच्छकयोः सूक्ष्माऽप्यप्रीतिर्मा भूदिति अप्राप्तेऽतीते वा प्रवर्त्तनं पुरः-पश्चात्कर्मादि मा भूदतो मध्ये ॥१॥ उत्क्षिप्तादिचरका भावयुक्ताः खल्वभिग्रहा भवन्ति गायन् वा रुदन् वा यद्ददाति निषण्णादिर्वा ॥२॥
५ उ मज्झंमि–मु० । इतो मज्झे पंचव० ॥

" [1]ओसक्कण अहिसक्कण परंमुहालंकिएतरो वावि । [2]भावन्नतरेण य जुओ अह भावाभिग्गहो नाम ॥१॥" [पञ्चवस्तु ३०४] ॥३॥

**'रसच्चाओ'** त्ति, रसानां-मतुब्लोपाद्विशिष्टरसवतां विकारहेतूनां दुग्धादीनां त्यागो-वर्जनं रसत्यागः ॥४॥

**'कायकिलेसो'** त्ति कायस्य—शरीरस्य क्लेशः—शास्त्राविरोधेन बाधनं कायक्लेशः, स च वीरासनाद्यासनकरणेन अप्रतिकर्मशरीरत्व-केशोल्लुञ्चनादिना च विचित्रः, यदवाचि—

" [3]वीरासणउक्कुडुगासणाइं लोयाइओ य विन्नेओ । कायकिलेसो संसारवासनिव्वेयहेउत्ति ॥१॥
[4]वीरासणाइसु गुणा कायनिरोहो दया य जीवेसु । परलोगमई य तहा बहुमाणो चेव अन्नेसिं ॥२॥
[5]निस्संगया अ पच्छा-पुरकम्मविवज्जणं च लोयगुणा । दुक्खसहत्तं नरगाइभावणाए य निव्वेओ ॥३॥" ॥५॥

**'संलीयणा य'** त्ति, संलीनता—गुप्तता, सा चेन्द्रिय-कषाय-योगविषया विविक्तशयनासनता चेति चतुर्धा, यदुक्तम्—

---

१ अवष्वष्कणमभिष्वष्कणं पराङ्मुखोऽलङ्कृत इतरो वापि । भावान्यतरेण वा युक्त एष भावाभिग्रहो नाम ॥१॥
२ भावंतरेण मु० । भावण्णयरेण—पञ्चवस्तु ॥
३ विरासनोत्कटुकासनादि लोचादिकश्च विज्ञेयः । कायक्लेशः संसारवासनिर्वेदहेतुरिति ॥१॥
४ वीरासनादिषु गुणाः कायनिरोधो दया च जीवेषु । परलोकमतिश्च तथा बहुमानश्चैवान्येषाम् ॥२॥
५ निःसङ्गता च पश्चात्पुरः कर्मविवर्जनं च लोचगुणाः । दुःखसहत्वं नारकभावनया च निर्वेदः ॥३॥

" [1]इंदिय-कसाय-जोए पडुच्च संलीणया मुणेयव्वा । तह य विवित्ता चरिया पन्नत्ता [2]वीयराएहिं ॥१॥"
तत्र श्रवणेन्द्रियेण शब्देषु मधुरादिभेदेषु रागद्वेषाऽकरणं श्रवणेन्द्रियसंलीनता, यदाहुः–

" [3]सद्देसु य भद्दयपावएसु सोयविसयमुवगएसु । तुट्ठेण व रुट्ठेण व समणेण सया न होयव्वं ॥१॥"
[ज्ञाता धर्म० १७।१६]

एवं चक्षुरादीन्द्रियेष्वपि भावनीयम् , यथा—

" [4]रूवेसु य भद्दयपावएसु चक्खुविसयमुवगएसु तुट्ठेण व रुट्ठेण व समणेण सया न होयव्वं ॥१॥"
इत्याद्यभिलापेनेति, कषायसंलीनता च कषायाणामनुदीर्णानामुदयनिरोधेन उदीर्णानां च निष्फलीकरणेन विज्ञेया, यदभ्यधायि–

[5]"उदयस्सेव [6]निरोहो उदयप्पत्ताण वाऽफलीकरणं । जं इत्थ कसायाणं कसायसंलीणया एसा ॥१॥"

योगसंलीनता पुनर्मनो–वाक्कायलक्षणयोगानामकुशलानां निरोधः कुशलानामुदीरणं च; यदवोचन्–

---

१ इन्द्रिय-कषाय योगान् प्रतीत्य संलीनता ज्ञातव्या । तथा विविक्ता चर्या प्रज्ञप्ता वीतरागैः ॥१॥
२ वीयरागेहिं–सं०, दशवै० हा० टी० (पृ० २९ A) ॥
३ शब्देषु च भद्रकपापकेषु श्रोत्रविषयमुपगतेषु । श्रमणेन सदा तुष्टेन रुष्टेन वा न भवितव्यम् ॥१॥
४ रूपेषु च भद्रकपापकेषु चक्षुर्विषय० ॥
५ उदयस्यैव निरोधः प्राप्तोदयानां वाऽफलीकरणम् । यदत्र कषायाणां कषायसंलीनतैषा ॥१॥
६ निसेहो–मु० ॥

[1]"अपसत्थाण निरोहो जोगाणमुदीरणं च कुसलाणं । कज्जंमि य विहिगमणं जोगे संलीणया भणिया ॥१॥" विविक्तशयनासनतारूपा पुनः संलीनता आरामादिषु स्त्री-पशु-पण्डकादिरहितेषु यदवस्थानम्, यदाहुर्महर्षयः—

[2]"आरामुज्जाणाइसु थी-पसु-पंडगविवज्जिए ठाणं। फलगाईण य गहणं तह भणियं एसणिज्जाणं ॥१॥"॥६॥

चः समुच्चये, 'बज्झो तवो होइ'त्ति एतदनशनादिकं बाह्यं तपो भवति, बाह्यत्वं चास्य बाह्यद्रव्याद्यपेक्षत्वात्, प्रायो बहिः शरीरस्य तापकत्वात् लौकिकैरपि तपस्तया ज्ञायमानत्वात् कुतीर्थिकैरपि स्वाभिप्रायेणासेव्यमानत्वाच्चेति ॥२७०॥

'पायच्छित्त' मित्यादि, इह चित्तं—जीवो भण्यते, ततः [3]प्रायो--बाहुल्येन चित्तं--जीवं विशोधयति—मूलोत्तरगुणविषयातिचारजनितकर्ममलमलिनं निर्मलं करोतीति प्रायश्चित्तम्, तत् पुनरालोचनादिकं दशधा, यदाहुः—

[4]"आलोयण—पडिक्कमणे मीस—विवेगे तहा विउस्सग्गे। तव छेय-मूल-अणवट्ठया य पारंचिए चेव" ॥१॥ इति ७ ॥

१ अप्रशस्तानां योगानां निरोधः कुशलानां चोदीरणम् । कार्ये च विधिगमनं योगे संलीनता भणिता ।
२ आरामोद्यानादिषु स्त्री-पशु-पण्डकविवर्जिते स्थानम् । तथा एषणीयानां फलकादीनां ग्रहणं भणितम् ॥१॥
३ तुलना—दशवै० हा० टी० (पृ० ३०A तः) ॥
४ आलोचना प्रतिक्रमणं मिश्रं विवेकस्तथोत्सर्गः । तपश्छेदो मूलमनवस्थाप्यं पाराञ्चिकं चैव ॥१॥

एतत्स्वरूपं चाष्टानवतिद्वारे न्यक्षेण वक्ष्यते ।

'विणए' त्ति विनीयते—क्षिप्यते अष्टप्रकारं कर्मानेनेति विनयः, स च ज्ञान-दर्शनादिभेदात् सप्तधा, यदाहुः—

"[1]नाणे दंसण-चरणे मण-वय-काओवयारिओ विणओ । नाणे पंचपयारो मइनाणाईण सद्दहणं ॥१॥ [2]भत्ती तह बहुमाणो तद्दिट्ठत्थाण सम्मभावणया । विहिगहणऽभासोऽवि य एसो विणओ जिणाभिहिओ ॥२॥"

शुश्रूषणादिकश्च दर्शनविनयः, यदाहुः—

"★ सुस्सूसणा अणासायणा य विणओ उ दंसणे दुविहो । दंसणगुणाहिएसु किज्जइ सुस्सूसणाविणओ ॥१॥ सक्कारऽब्भुट्ठाणं संमाणासणअभिग्गहो तह य । आसणअणुप्पयाणं किइकम्मं अंजलिगहो य ॥२॥ इंतस्सऽणुगच्छणया ठिअस्स तह पज्जुवासणा भणिया । गच्छंताणुव्वयणं एसो सुस्सूसणाविणओ ॥३॥"

---

१ ज्ञाने दर्शने चारित्रे मनसि वाचि काये औपचारिको विनयः । ज्ञाने पञ्चप्रकारो मतिज्ञानादीनां श्रद्धानम् ॥१॥
२ भक्तिस्तथा बहुमानः तद्दृष्टार्थानां सम्यक्त्वभावना । विधिग्रहणमभ्यासोऽपि चैष विनयो जिनाभिहितः ॥२॥
★ शुश्रूषणा अनाशातना च विनयस्तु दर्शने द्विविधः । दर्शनगुणाधिकेषु क्रियते शुश्रूषणाविनयः ॥१॥ सत्कारोऽभ्युत्थानं सन्मानमासनाभिग्रहश्च तथा । आसनानुप्रदानं कृतिकर्माञ्जलिग्रहश्च ॥२॥ आयातोऽनुगमनं स्थितस्य तथा पर्युपासनं भणितम् । व्रजतोऽनुव्रजनमेष शुश्रूषणाविनयः ॥३॥

[1]सत्कारः-स्तवन-वन्दनादि, अभ्युत्थानं–विनयार्हस्य दर्शनादेवासनत्यजनम्, सन्मानो-वस्त्र-पात्रादिभिः पूजनम्, आसनाभिग्रहः पुनस्तिष्ठत एव गुरोरादरेणासनानयनपूर्वकमत्रोपविशतेति भणनम्, आसनानुप्रदानं—स्थानात्स्थानान्तरे आसनस्य सञ्चारणम्, कृतिकर्म—वन्दनकम्, अञ्जलिग्रहः-अञ्जलि-करणम्, शेषं प्रकटम्, अनाशातनाविनयः पुनः पञ्चदशविधः, तस्य चेदं स्वरूपम्–

“[2]तित्थयर-धम्म-आयरिअ-वायगे थेर-कुल-गणे संघे। संभोइअ-किरियाए मइनाणाईण य तहेव” ॥१॥

साम्भोगिकाः--एकसामाचारिकाः। क्रिया--आस्तिकता।

“[3]कायव्वा पुण भत्ती बहुमाणो तह य वन्नवाओ य। अरहंतमाइयाणं केवलनाणावसाणाणं” ॥१॥

भक्तिः--बाह्या प्रतिपत्तिः, बहुमानः–आन्तरः प्रीतिविशेषः, वर्णवादो–गुणग्रहणम्, चारित्रविनयः पुनः–

“[4]सामाइयाइचरणस्स सद्दहाणं तहेव कायेणं। संफासणं परूवणमह पुरओ सव्वसत्ताणं ॥१॥” तथा–

[5]“मण-वय-काइयविणओ आयरियाईण सव्वकालम्मि। अकुसलमणाइरोहो कुसलाणमुदीरणं तह य ॥२॥”

---

१ अगस्त्यसिंह स्थविरैस्तु दशवैकालिकचूर्णौ “सक्कार–सम्माणविशेषोऽयं वत्थादीहिं सक्कारो, थुणणादिणा सम्माणो।” इति व्याख्यातम् (दशवै० अ० चू० पृ० १५) ॥

२ तीर्थंकरे धर्मे आचार्ये वाचके स्थविरे कुले गणे सङ्घे। साम्भोगिके क्रियावति मतिज्ञानादीनां च तथैव ॥१॥

३ कर्त्तव्या पुनर्भक्तिर्बहुमानस्तथा वर्णवादश्च। अर्हदादीनां केवलज्ञानावसानानाम् ॥१॥

४ सामायिकादिचारित्राणां श्रद्धानं तथैव कायेन। संस्पर्शनं अथ च सर्वसत्वानां पुरतः प्ररूपणम् ॥१॥

५ मनो-वाक्कायविनय आचार्यादीनां सर्वकाले। अकुशलमनआदिरोधः कुशलानां तथोदीरणं च ॥२॥

तथा उपचारेण—सुखकारिक्रियाविशेषेण निर्वृत्त औपचारिकः स चासौ विनयश्च औपचारिकविनयः, स च सप्तधा—

“ [1]अब्भासऽच्छणं छंदाणुवत्तणं कयपडिकिई तह य। कारिअनिमित्तकरणं दुक्खत्तगवेसणं तह य ॥१॥

[2]तह देसकालजाणण सव्वत्थेसु तह य अणुमई भणिया। उवयारिओ उ विणओ एसो भणिओ समासेणं ॥२॥”

तत्र 'अब्भासऽच्छणं'ति सूत्राद्यर्थिना नित्यमेवाचार्यस्याभ्यासे—प्रत्यासन्ने स्थातव्यम्, तथा छन्दः—अभिप्रायो गुरूणामनुवर्तनीयः, तथा कृतप्रतिकृतिः—कृते भक्तादिना उपचारे प्रसन्ना गुरवः प्रतिकृतिं—प्रत्युपकारं सूत्रार्थादिदानतो मे करिष्यन्ति, न नामेकैव निर्जरेति भक्तादिदाने गुरोर्यतितव्यम्, तथा कार्यनिमित्तकारणम्, कार्यं—श्रुतप्रापणादिकम्, निमित्तं—हेतुं कृत्वा श्रुतं प्रापितोऽहमनेनेति हेतोरित्यर्थः, विशेषेण तस्य विनये वर्तितव्यम्, तदनुष्ठानं च कर्तव्यम्, यद्वाकारितेन—सम्यक्सूत्रार्थमध्यापितेन पुनस्तन्निमित्तं करण—विनयस्य विधानं कारितनिमित्तकारणम्, गुरुणा सम्यक् सूत्रादिकं पाठितेन विनेयेन विशेषतो विनये वर्तितव्यं तदुक्तार्थानुष्ठानं च कर्त्तव्यमिति भावः, तथा दुःखार्त्तस्य—दुःखपीडितस्य गवेषणम् -औपधादिना प्रतिजागरणं दुःखार्त्तगवेपणम्, पीडितस्योपकारकरणमित्यर्थः, तथा देश-कालज्ञानमवसरज्ञते-

१ अभ्यासस्थानं छन्दोऽनुवर्त्तनं कृतप्रतिकृतिस्तथा च। कारितनिमित्तकरणं दुःखार्त्तगवेषणं च तथा ॥१॥
२ तथा देशकालज्ञानं तथा सर्वार्थेष्वनुमतिर्भणिता। औपचारिकस्तु विनय एष भणितः समासेनम् ॥२॥

त्यर्थः, तथा सर्वार्थेषु गुरुविषयेष्वनुमतिः—आनुकूल्यम्, [1]अथवा द्विपञ्चाशद्भेदो विनयः, स च पञ्चषष्टि-द्वारे वक्ष्यते ८ ॥

**वेयावच्च**'मिति व्यापिपर्ति स्मेति व्यापृतः तस्य भावो वैयावृत्त्यम्, धर्मसाधनार्थमन्नादिदान-मित्यर्थः, यदाहुः—

" [2]वेयावच्चं वावडभावो इह धम्मसाहणनिमित्तं। अन्नाइयाण विहिणा संपायणमेस भावत्थो ॥१॥" ६।

'**तहेवसज्झाओ**'त्ति सुष्ठु आ—मर्यादया कालवेलापरिहारेण पौरुष्यपेक्षया वा अध्यायः अध्ययनं स्वाध्यायः, स च पञ्चधा—वाचना-प्रच्छना-परावर्तना-ऽनुप्रेक्षा-धर्मकथाभेदात्, तत्र वाचना—शिष्याध्यापनम् १, गृहीतवाचनेनापि संशयोत्पत्तौ पुनः प्रष्टव्यमिति पूर्वाधीतस्य सूत्रादेः शङ्कितादौ प्रश्नः प्रच्छना २, प्रच्छनाविशोधितस्य सूत्रस्य मा भूद्विस्मरणमिति परावर्तना ३, सूत्रस्य घोषादिविशुद्धं गणन-मित्यर्थः। सूत्रवदर्थेऽपि सम्भवति विस्मरणमतोऽनुप्रेक्षणम्, ग्रन्थार्थस्य मनसाऽभ्यासोऽनुप्रेक्षा चिन्तनि-केत्यर्थः ४, एवमभ्यस्तश्रुतेन धर्मकथा कर्तव्येति, धर्मस्य—श्रुतरूपस्य कथा—व्याख्या धर्मकथेति ५, ॥१०॥

'**झाण**'मिति ध्यायते—चिन्त्यते वस्त्वनेनेति ध्यातिर्वा ध्यानम्—अन्तर्मुहूर्तमात्रकालमेकाग्रचित्ताध्य-वसानम्, यदाहुः—

---

१ "अथवा एस सव्वो चेव विणतो नाण-दंसण-चरित्ताण अव्वतिरित्तो त्ति तिविहो चेव।" इति दशवै० चूर्णौ (पृ० १५) ॥

२ वैयावृत्त्यं व्यावृतभाव इह धर्मसाधननिमित्तम्। अन्नादीनां विधिना संपादनमेष भावार्थः ॥१॥

"[1]"अंतोमुहुत्तमेत्तं चित्तावत्थाणमेगवत्थुंमि । छउमत्थाणं झाणं जोगनिरोहो जिणाणं तु" ॥१॥

तच्चतुर्धा—आर्त्त-रौद्र-धर्म्य-शुक्लभेदात्, तत्र ऋतं—दुःखं तस्य निमित्तं तत्र वा भवं ऋते वा—पीडिते प्राणिनि भवमार्तम्, तच्चामनोज्ञानां शब्द-रूप-रस-स्पर्श-गन्धलक्षणानां विषयाणां तदाश्रयभूतवायसादिवस्तूनां वासमुपनतानां विप्रयोगप्रणिधानं भाविनां ❀चाऽसम्प्रयोगचिन्तनम् १ । एवं शूल-शिरोरोगादिवेदनाया अपि विप्रयोगाऽसंप्रयोगप्रार्थनम् २ । इष्टशब्दादिविषयाणां सातवेदनायाश्चाऽविप्रयोगसम्प्रयोगप्रार्थनम् ३ । देवेन्द्र-चक्रवर्तित्वादिप्रार्थनं च ४ । शोकाक्रन्दन-स्वदेहताडन-विलपनादिलक्षणलक्ष्यं तिर्यग्गतिगमनकारणं विज्ञेयम् १ । तथा रोदयत्यपरानिति रुद्रः—प्राणिवधादिपरिणत—आत्मैव, तस्येदं कर्म रौद्रम्, तदपि सत्त्वेषु वध-वेध-बन्धन-दहनाङ्कन-मारणादिप्रणिधानम् १ । पैशुन्यासभ्यासद्भूतघातादिवचनचिन्तनम् २ तीव्रकोप-लोभाकुलं भूतोपघातपरायणं परलोकापायनिरपेक्षं परद्रव्यहरणप्रणिधानम् ३ । सर्वाभिशङ्कनपरम्परोपघातपरायणशब्दादिविषयसाधकद्रव्यसंरक्षणप्रणिधानं च ४ । [2]उत्सन्न--वधादिलिङ्गगम्यं नरकगति-



---

१ अन्तर्मुहूर्त्तमात्रं चित्तस्यैकवस्तुनि अवस्थानम् । छद्मस्थानां ध्यान जिनानां तु योगनिरोधः ॥१॥ ❀ वा° मु०॥

२ रुद्दस्स णं झाणस्स चत्तारि लक्खणा पं०, तं-ओसण्णदोसे, बहुदोसे, अन्नाणदोसे, आमरणंतदोसे । (ठाणांग सू० २४७ । अस्य अभयदेवसूरिकृता व्याख्या—

हिंसादीनामन्यतरस्मिन् ओसन्नं प्रवृत्तेः प्राचुर्यं बाहुल्यं यस्स एव दोषः, .... तथा बहुष्वपि—सर्वेष्वपि हिंसादिषु दोषः—प्रवृत्तिलक्षणो बहुदोषः, तथा अज्ञानात् कुशास्त्रसंस्कारात् हिंसादिष्वधर्मस्वरूपेषु नरकादिकारणेषु धर्मबुद्ध्याऽभ्युदयार्थं या प्रवृत्तिस्तल्लक्षणो दोषोऽज्ञानदोषः, .... तथा मरणमेवान्तो मरणान्तः आमरणान्तादामरणान्तम्"—तत्रैव टीकायाम् (पृ० १८६) ।

गमनकारणमवसेयम् २ । तथा धर्मः—क्षमादिदशलक्षणः तस्मादनपेतं धर्म्यम्, तच्च सर्वज्ञाऽऽज्ञानुचिन्तनम् १ राग-द्वेष-कषायेन्द्रियवशजन्तूनामपायविचिन्तनम् २ । ज्ञानावरणादिशुभाशुभकर्मविपाकसंस्मरणम् ३ । क्षिति-वलय-द्वीप-समुद्रप्रभृतिवस्तुसंस्थानादिधर्मालोचनात्मकम् ४ । [1]जिनप्रणीतभावश्रद्धानादिचिह्नगम्यं देवगत्यादिफलसाधकं ज्ञातव्यम् ३ । तथा शोधयत्यष्टप्रकारं कर्ममलं शुचं वा—शोकं क्लमयति-अपनयतीति निरुक्तविधिना [2]शुक्लम्, एतदपि पूर्वगत श्रुतानुसारिनानानयमतैकद्रव्योत्पत्ति-स्थितिभङ्गादिपर्यायानुस्मरणादिस्वरूपम् ४ । [3]अवधा-सम्मोहादिलिङ्गगम्यं मोक्षादिफलप्रसाधकं विज्ञेयम् ४ । अत्र च धर्म-शुक्ले एव तपसी निर्जरार्थत्वात्, नार्त-रौद्रे बन्धहेतुत्वादिति ११ ॥

**'उस्सग्गोऽविय'** त्ति उत्सर्जनीयस्य परित्याग उत्सर्गः, स द्विविधः—बाह्योऽभ्यन्तरश्च, तत्र बाह्यो द्वादशादिभेदस्योपधेरतिरिक्तस्यानेषणीयस्य संसक्तस्यान्नपानादेर्वा त्यागः, आभ्यन्तरः कषायाणां मृत्युकाले शरीरस्य च त्यागः, ननु उत्सर्गः प्रायश्चित्तमध्य एवोक्तस्तत् किं पुनरत्र भणनेन ?, सत्यम्, सोऽतिचारविशुद्ध्यर्थमुक्तः अयं तु सामान्येन निर्जरार्थमुक्त इत्यपौनरुक्त्यम् १२ ॥

---

१ धम्मस्स णं झाणस्स चत्तारि लक्खणा पं० तं—आणारुई, णिसग्गरुई, सुत्तरुई, ओगाढरुती । धम्मस्स णं झाणस्स चत्तारि आलंबणा पं०, तं वायणा, पडिपुच्छणा, परियट्टणा, अणुप्पेहा, धम्मस्स णं झाणस्स चत्तारि अणुप्पेहाओ पं०, त-एगाणुप्पेहा, अणिच्चाणुप्पेहा, असरणाणुप्पेहा, संसाराणुप्पेहा (इति ठा० सू० २४७) ॥

२ पृथक्त्ववितर्कम्, एकत्ववितर्कम्, सूक्ष्मक्रियाप्रतिपाति; व्युपरतक्रियानिवृत्तीति चतुर्विधं शुक्लध्यानम् । तत्वार्थभाष्य (९।४१) ॥

३ 'सुक्कस्स' णं झाणस्स चत्तारि लक्खणा पं०, तं—अव्वहे असम्मोहे विवेगे विउस्सग्गे (ठा० सू० २४७) ॥

'अब्भितरओ तवो होइ'त्ति इदं प्रायश्चित्तादि व्युत्सर्गान्तमनुष्ठानं लौकिकैरनभिलक्ष्यत्वात् तन्त्रान्तरीयैश्च भावतोऽनासेव्यमानत्वात् मोक्षावाप्तावन्तरङ्गत्वादभ्यन्तरस्य कर्मणस्तापकत्वादभ्यन्तरैरेवान्तर्मुखैर्भगवद्भिर्ज्ञायमानत्वाच्चाभ्यन्तरं तपो भवतीति, ॥२७१॥ एतेषां च कथम् **अतिचारत्वं*** भवतीति आह—' '**सम्ममकरणे**' इत्यादि, एतेषामनशनादीनां द्वादशानां तपोभेदानां सम्यगकरणे–विपरीततया न्यूनाधिक्येन यथावस्थितानुष्ठानरूपे अतिचारा अपि द्वादश भवन्तीति, अथ वीर्यत्रिकातिचारानाह—

'**तिगं तु विरिअस्स**'त्ति वीर्यस्य त्रिकं पुनर्मनो-वाक्कायाः सूचकत्वात्सूत्रस्य मनो-वाक्कायव्यापाराः ते च पापप्रयुक्ताः–पापविषये प्रवृत्ताः सन्तो वीर्यत्रिकातिचारा भवन्तीति ॥२७२॥

'**पण सम्म**' त्ति व्याख्यायते—

**संका कंखा य तहा वितिगिच्छा अन्नतित्थियपसंसा ।**
**परतित्थिओवसेवणमइयारा पंच सम्मत्ते ॥२७३॥**

'**संका कंखे**'त्यादि, शङ्का काङ्क्षा तथा विचिकित्सा अन्यतीर्थिकप्रशंसा परतीर्थिकोपसेवनं च अतीचाराः पञ्च सम्यक्त्वे भवन्तीति । तत्र शङ्का–भगवदर्हत्प्रणीतेषु पदार्थेषु धर्मास्तिकायादिष्वत्यन्तगहनेषु मतिदौर्बल्यात् सम्यगनवधार्यमाणेषु संशयः किमेवं स्यान्नैवमिति, यदाहुः-"संसयकरणं सङ्के" ति, सा च शङ्का [2]द्विभेदा–देशशङ्का सर्वशङ्का च, देशशङ्का देशविषया जीवाद्यन्यतमपदार्थैकदेशगोचरेत्यर्थः,

* अतीचार. संभवतीति मु० ॥ १ 'सम्मे' त्यादि-मु० ॥ २ द्विविधा-मु० ॥

यथाऽस्ति जीवः केवलं सर्वगतोऽसर्वगतो वा ? सप्रदेशोऽप्रदेशो वेति, सर्वशङ्का सर्वविषया यथाऽस्ति धर्मो नास्ति वेति, इयं च द्विधाऽपि शङ्का भगवदर्हत्प्रणीतप्रवचनेऽप्रत्ययरूपा सम्यक्त्वं दूषयतीत्यतिचारः, केवलाऽऽगमगम्या अपि हि पदार्था अस्मदादिप्रमाणपरीक्षानिरपेक्षा आप्तप्रणेतृकत्वान्न सन्देग्धुं योग्याः, यत्रापि मतिदौर्बल्यादिभिर्मोहवशात् क्वचन संशयो भवति तत्राप्यप्रतिहतेयमर्गला, यथा--

△ कत्थइ मइदुब्बल्लेण तव्विहायरियविरहओ वावि । नेयगहणत्तणेण य नाणावरणोदयेणं च ॥१॥
हेऊदाहरणासंभवे य मइ सुट्ठु जं न बुज्झेज्जा । सव्वन्नुमयमवितहं तहावि तं चिंतए मइमं ॥२॥
अणुवकयपराणुग्गहपरायणा जं जिणा जुगप्पवरा । जिअरागदोसमोहा य नन्नहावाइणो तेणं ॥३॥

यथा वा—"सूत्रोक्तस्यैकस्याप्यरोचनादक्षरस्य भवति नरः । मिथ्यादृष्टिः सूत्रं हि नः प्रमाणं जिनाभिहितम् ॥१॥ एकस्मिन्नप्यर्थे संदिग्धे प्रत्ययोऽर्हति हि नष्टः । मिथ्या च दर्शनं तत् स चादिहेतुर्भवगतीनाम् ॥२॥" इत्यर्थः १ ।

काङ्क्षा—अन्यान्यदर्शनग्रहः, सापि सर्वविषया देशविषया च, तत्र सर्वविषया सर्वपाखण्डिधर्मीकाङ्क्षारूपा, यथा परिव्राजक-भौतिक-ब्राह्मणादयोऽपि विषयसुखजुषोऽपि परलोकसुखेन युज्यन्त इति

---

△ कुत्रापि मतिदौर्बल्येन तद्विधाचार्यविरहतो वापि । ज्ञेयगहनत्वेन च ज्ञानावरणोदयेन च ॥१॥
हेतूदाहरणासंभवे च सति सुष्ठु यन्न बुध्येत । सर्वज्ञमतमवितथं तथापि तच्चिन्तयेत् मतिमान् ॥२॥
अनुपकृत-परानुग्रहपरायणा यत् जिना युगप्रवराः । जितराग-द्वेष-मोहाश्च नान्यथावादिनस्तेन ॥३॥

साधीयानेव तदीयोऽपि धर्मः, देशकाङ्क्षा त्वेकादिदर्शनविषया, यथा सुगतेन भगवता भिक्षूणामक्लेशकारी धर्म उपदिष्टः स्नानान्नपानाच्छादन-शयनादिषु सुखानुभवद्वारेण, यदाह–

"मृद्वी शय्या प्रातरुत्थाय पेया, भक्तं मध्ये पानकं चापराह्णे। द्राक्षा खण्डं शर्करा चार्धरात्रे, मोक्षश्चान्ते शाक्यसिंहेन दृष्टः ॥१॥" इति, एतदपि घटमानकमेव, एवं च काङ्क्षापि परमार्थतो भगवदर्हत्प्रणीतागमानाश्वासरूपा सम्यक्त्वं दूषयतीत्यतिचारः २, विचिकित्सा–फलं प्रति सन्देहः, स च सत्यपि प्रमाणयुक्त्यागमोपपन्ने सर्वज्ञधर्मेऽस्य दुष्करतरस्य महतस्तपःक्लेशस्य मया विधीयमानस्य सिकताकणकवलनवन्निरास्वादस्यायत्यां फलसम्पत् काचिद्भविष्यति उत क्लेशमात्रमेवेदं निर्जराफलविकलमिति, द्विधाऽपि हि क्रिया वीक्ष्यन्ते सफला अफलाश्च कृषीवलादीनाम्, अत इयमपि क्रिया तथा सम्भाव्यते, न त्वेवं चिन्तयति, यथा–

❀ "पुव्वपुरिसा जहोदियमग्गचरा घडइ तेसि फलजोगो। अम्हेसु य धिइ-संघयणविरहओ न तहमेसि फलं ॥१॥" इति,

एषाऽपि विचिकित्सा क्रियमाणा भगवद्वचनानाश्वासरूपत्वेन सम्यक्त्वस्य दूषकत्वादतिचारः, न चेयं शङ्कातो न भिद्यते इति वाच्यम्, यतः शङ्का सकलासकलपदार्थभाक्त्वेन द्रव्यगुणविषया, इयं तु क्रियाफलविषयेति भेदः, भवतु वा एवं शङ्का, विचिकित्सा त्वन्यथा एव व्याख्यायते–विचिकित्सा–निन्दा,

❀ पूर्वपुरुषा यथोदितमार्गचराः घटते तेषां फलयोगः। अस्मासु च धृति-संहननविरहतोन तथैषां फलम् ॥१॥

सा च सदाचारसाधुविषया, यथाऽस्नानेन प्रस्वेदजलक्लिन्नमलत्वाद् दुर्गन्धिवपुष एते महानुभावाः, को दोषः स्याद् यदि प्रासुकजलेनाङ्गप्रक्षालनं कुर्वीरन्निति, एवंरूपाऽपि विचिकित्सा विधीयमाना भगवद्धर्मानाश्वासरूपत्वात् सम्यक्त्वं दूषयतीत्यतिचारः ३. तथा 'अन्यतीर्थिकप्रशंसा' अन्यतीर्थिकाः—सौगत-भौतिकादयः तेषां प्रशंसा—अहो एतेषां राजपूज्यत्वमहो एतेषां सर्वजनमान्यत्वमहोऽदूष्यवैदुष्यादिगुणसमृद्धिः एवमादि, तेषां प्रशंसा प्रतायमानाऽचिन्त्यचिन्तामणिकल्पं सम्यक्त्वं दूषयतीत्यतिचारः ४, तथा **'परतीर्थिकोपसेवनं'** परतीर्थिकैः सह एकत्र संवासात् परस्परालापादिजनितः परिचयः, तदपि सम्यक्त्वं दूषयतीत्यतिचारः, यत एकत्रवासे तत्प्रक्रियादर्शन-श्रवणाभ्यां दृढसम्यक्त्वस्यापि सम्यक्त्वह्रासः सम्भाव्यते, किमुत मन्दबुद्धेर्नवधर्मस्येति ५, ननु दर्शनाचारं प्रतिपादयता तद्विपक्षतया दर्शनस्याष्टावतिचाराः प्रतिपादिताः ततस्तत्रापि शङ्का-काङ्क्षा-विचिकित्साः अत्रापि चेति कथं न पौनरुक्त्यम् ?, तत्र ब्रूमः--पूर्वं निःशङ्कितत्वाद्यभावमात्रमतिचारतया प्रत्यपादि इह तु जीवादिविषयशङ्कादिसद्भाव इति न कश्चिद्दोषः, इह चातिचारो व्यवहारनयमताश्रयणेन सत्येव सम्यक्त्वे स्खलनामात्रम्, निश्चयनयमते तु सम्यक्त्वाभाव एव, तथा चोक्तम्—

"एकस्मिन्नप्यर्थे" इत्यादि ॥२७३॥

अथ **वयाइं**'ति वितन्यते, तत्राह—

**पढमवये अइआरा नर-तिरिआणऽन्न–पाण-वोच्छेओ ।**
**बंधो वहो य अइभाररोवणं तह छविच्छेओ ॥२७४॥**

'पढमवये'त्यादि, [1]प्रथमव्रते-प्राणातिपातविरमणलक्षणे नर-तिरश्चामन्न-पानव्यवच्छेदः तथा बन्धस्तथा वधस्तथाऽतिभारारोपणं तथा छविच्छेदः, एते पञ्चातिचारा-मालिन्यरूपा भवन्ति, तत्रान्नपानव्यवच्छेदो-भोजन-पानयोर्निषेधो द्विपद चतुष्पदानां क्रियमाणोऽतिचारः प्रथमव्रतस्य, ननु यद्येवं ज्वरादिरोगाक्रान्तानां पुत्रादीनां लङ्घनादिविधापने गृहीतहिंसाविरमणव्रतस्यातिचारो भविष्यति, तदयुक्तम् , सोपस्काराणि हि सूत्राणि भवन्ति, ततः क्रोधादिवशत इति सूत्रे अध्याहर्तव्यम् , ततः क्रोधादिदूषितमना यद्यन्नादिनिषेधं करोति तदाऽतिचारः, यदा तु हितबुद्धया रोगाद्यभिभूतानां पुत्रादीनामन्नादिनिषेधं करोति तदा नातिचार इति, एवमन्यत्रापि क्रोधादिवशत इति द्रष्टव्यम् , न चैतदनार्षम् , यतोऽन्यत्राभ्यधायि—"[2]बंध-वह-छविच्छेयं अइभारं भत्त-पाणवोच्छेयं । कोहाइदूसियमणो गोमणुयाईण नो कुणइ ॥१॥" इत्यादि, ।

किं बहुना ?, यद्रोगाद्यभिभूतानां यच्चापठनादिपराणां पुत्रादीनां यच्च शान्तिकृते उपवासादिकारणं तन्नातिचार इत्यर्थः, तथा बन्धो-रज्ज्वादिना गोमनुष्यादीनां नियन्त्रणं स्वपुत्रादीनामपि विनयग्राहणार्थं क्रियते ततः क्रोधादिवशत इत्यत्रापि सम्बन्धनीयम् , अतः प्रबलकषायोदयाद् यो बन्धः सोऽतिचार इति, तथा वधो-लकुटादिना हननम् , कषायादेव वध इत्यन्ये, तथा 'अतिभारारोपणम्' अतिमात्रस्य-वोढुमशक्यस्य भारस्यारोपणं-गो करभ-रासभ-[3]मनुष्यादेः स्कन्धे पृष्ठे शिरसि वा वहनायाधि-

---

१ तुलना-योगशास्त्रटीका (३।९०) । धर्मसङ्ग्रहः (भा १ पृ० १०० तः) ॥ २ बन्ध-वध-च्छविच्छेदमतिभारं भक्त-पानव्यवच्छेदम् क्रोधादिदूषितमनाः गो-मनुजादीना न करोति ॥१॥ ३ मनुष्यादीनां-मु० ॥

रोपणम्, इहापि क्रोधाल्लोभाद्वा यदधिकभारारोपणं सोऽतिचार इति, तथा 'छविच्छेदः,' छविः—त्वक् तद्योगाच्छरीरमपि वा छविः तस्याश्छेदो—द्वैधीकरणम्, स च पादवल्मिकोपहतस्य पुत्रादेरपि क्रियते, ततः क्रोधादिवशत इत्यत्रापि दृश्यम्, अत्र चावश्यकचूर्ण्यादिभणितो विधिरयं—बन्धो द्विपदानां चतुष्पदानां वा स्यात्, सोऽपि सार्थकोऽनर्थको वा स्यात्, तत्रानर्थकस्तावद्विधातुं न युज्यते, सार्थकः पुनरयं द्विविधः—सापेक्षो निरपेक्षश्च, तत्र सापेक्षो यो दामग्रन्थिना शिथिलेन यश्चप्रदीपनादिषु मोचयितुं छेत्तुं वा शक्यते, निरपेक्षः पुनर्यन्निश्चलमत्यर्थं च बद्ध्यते एवं तावच्चतुष्पदानां बन्धः, द्विपदानामपि दास-दासी-चौर-पाठादिप्रमत्तपुत्रादीनां यदि बन्धस्तदा सविक्रमणा एव ते बन्धनीया रक्षणीयाश्च यथा ज्वलनभयादिषु न विनश्यन्ति, तथा द्विपदचतुष्पदाः श्रावकेण त एव सङ्ग्रहितव्या ये अबद्धा एवासत इति, तथा छविच्छेदोऽपि तथैव, नवरं निरपेक्षो हस्त-पाद-कर्ण-नासिकादि यन्निर्दयं छिनत्ति, सापेक्षः पुनर्यद्गण्डं वाऽरुर्वा छिंद्याद्वा दहेद्वेति, तथाऽधिकभारोऽपि नारोपयितव्यः, प्रथममेव हि या द्विपदादिवाहनेन जीविका सा श्रावकेण मोक्तव्या, अथासावन्या न भवेत् तदा द्विपदो यं भारं स्वयमुत्क्षिपत्यवतारयति च एतावान् वाह्यते, चतुष्पदस्य तु यथोचितभारः किञ्चिदूनः क्रियते, हल-शकटादिषु पुनरुचितवेलायामसौ मुच्यत इति, तथा वधोऽपि प्रहाररूपस्तथैव, नवरं निरपेक्षप्रहारो निर्दयताडना, सापेक्षः पुनरेवं—यथा श्रावकेणादित एव भीतपर्षदा भवितव्यम्, यदि पुनः कोऽपि न करोति विनयं तदा तं मर्माणि मुक्त्वा लतया दवरकेण वा सकृद् द्विर्वा ताडयेदिति, तथा अन्नपानादिनिषेधः कस्यापि न करणीयः, तीक्ष्णबुभुक्षो ह्येवं म्रियेतापि, अतः स्वभोजनवेलायां ज्वरितादीन् विमुच्य नियमत एवान्यान् विधृतान् भोजयित्वा स्वयं भुञ्जीत,

अन्नादिनिरोधोऽपि सार्थकानर्थकादिभेदो बंधवद् द्रष्टव्यः, नवरं सापेक्षो रोगचिकित्सार्थं स्यात्, अपराधकारिणं च वाचैव वदेद्-अद्य ते भोजनादि न दास्यत इति, शान्तिनिमित्तं चोपवासादि कारयेत्, किं बहुना ?, मूलगुणस्याहिंसालक्षणस्यातिचारा यथा न भवन्ति तथा यतितव्यम्। ननु हिंसैव श्रावकेण प्रत्याख्याता ततो बन्धादिकरणेऽपि न कश्चिद् दोषः, हिंसाविरतेरखण्डितत्वात्, अथ बन्धादयोऽपि प्रत्याख्यातास्तदा तत्करणे व्रतभङ्ग एव भवेत्, विरतेः खण्डनात्, अपरं च-बन्धादीनां प्रत्याख्येयत्वे विवक्षितव्रतेयत्ता विशीर्यते प्रतिव्रतमतिचारव्रतानामाधिक्यादिति, एवं च न बन्धादीनामति[1]चारतेति। अत्र ब्रूमः, सत्यम्, हिंसैव प्रत्याख्याता न बन्धादयः, केवलं तत्प्रत्याख्यानेऽर्थतस्तेऽपि प्रत्याख्याता द्रष्टव्याः, हिंसोपायत्वात्तेषाम्, न च बन्धादिकरणेऽपि च व्रतभङ्गः किन्त्वतिचार एव, कथम् ? इह द्विविधं व्रतम्—अन्तर्वृत्त्या बहिर्वृत्त्या च, तत्र मारयामीति विकल्पाभावेन यदा कोपाद्यावेशात् परप्राणप्रहाणमविगणयन् बन्धादौ प्रवर्तते न च परो विपद्यते तदा निर्दयताविरत्यनपेक्षप्रवृत्तत्वेनाऽऽन्तरवृत्त्या व्रतस्य भङ्गो हिंसाया अभावाच्च बहिर्वृत्त्या पालनमिति, देशस्य भञ्जनात् देशस्य च पालनादतिचारव्यपदेशः प्रवर्तते, यदाहुः—

"न मारयामीति कृतव्रतस्य, विनैव मृत्युं क इहातिचारः ? ।
निगद्यते यः कुपितो वधादीन्, करोत्यसौ स्यान्नियमेऽनपेक्षः ॥ १ ॥
मृत्योरभावान्नियमोऽस्ति तस्य, कोपाद्दयाहीनतया तु भग्नः ।
देशस्य भङ्गादनुपालनाच्च, पूज्या अतीचारमुदाहरन्ति ॥२॥" [योगशास्त्र टीका ३।९०]

[1] तीचारतेति ब्रूमः-मु० ॥

यच्चोक्तं 'व्रतेयत्ता विशीर्यते' इति. तदयुक्तम्, विशुद्धाहिंसासद्भावे हि बन्धादीनामभाव एव, ततः स्थितमेतद्--बन्धादयोऽतिचारा एव, बन्धादिग्रहणस्योपलक्षणत्वान्मन्त्र-तन्त्रप्रयोगादयोऽन्येऽप्यतिचारतया विज्ञेया इति ॥२७४॥

द्वितीयव्रतातिचारानाह—

**सहसा कलंकणं १ रहसदूसणं २ दारमंतभेयं च ३ ।**
**तह कूडलेहकरणं ४ मुसोवएसो ५ [1]मुसादोसा ॥२७५॥**

'सहसे'त्यादि, [2]सहसा-अनालोच्य कलङ्कनं-कलङ्कस्य करणमभ्याख्यानमसद्दोषस्यारोपणमितियावत् चौरस्त्वं पारदारिकस्त्वमित्यादि प्रथमोऽतिचारः, ननु सहसा कलङ्कनमसद्दोषाभिधानरूपत्वेन प्रत्याख्यातत्वाद्भङ्ग एव न त्वतिचार इति, सत्यम्, किन्तु यदा परोपघातकमनाभोगादिनाऽभिधत्ते तदा सङ्क्लेशाभावेन व्रतसाक्षेपत्वान्न भङ्गः परोपघातहेतुत्वाच्च भङ्ग इति भङ्गाभङ्गरूपोऽतिचारः, यदा तु तीव्रसङ्क्लेशादभ्याख्याति तदा भङ्ग एव व्रतनिरपेक्षत्वादिति, तथा रहः- एकान्तस्तत्र भवं रहस्यं—राजादिकार्यसम्बद्धं यदन्यस्मै न कथ्यते तस्य दूषणम्--अनधिकृतेनैवाकारेङ्गितादिभिर्ज्ञात्वा अन्यस्मै प्रकाशनं रहस्यदूषणम्, यथा रहसि मन्त्रयमाणान् कांश्चिदवलोक्य गृहीतमृषाव्रतः कश्चिद्वदति—एते हि राजापकारादिकारकमिदमिदं च मन्त्रयन्ते, यद्वा रहस्यदूषणं—पैशुन्यम्, यथा द्वयोः प्रीतौ सत्यामेकस्याकारादिनोपलभ्याभिप्रायमितरस्य तथा कथयति यथा प्रीतिस्तयोः प्रणश्यति इति द्वितीयोऽतिचारः, तथा दाराणां—कलत्राणा-

१ मुसे दोसा–मु० ॥ २ तुलना—योगशास्त्रटीका (३।९१) । धर्मसङ्ग्रहः (भा० १ पृ० १०२) ॥

मुपलक्षणत्वान्मित्रादीनां च मन्त्रो--मन्त्रणं तस्य भेदः-प्रकाशनं दारमन्त्रभेदः, अस्य चानुवादरूपत्वेन सत्यत्वाद्यद्यपि नातिचारत्वं घटते तथापि विश्रब्धभाषितार्थप्रकटनजनितलज्जादितः कलत्रमित्रादेर्मरणादिसम्भवेन परमार्थतोऽस्यासत्यत्वात्कथञ्चिद्भङ्गरूपत्वेनातिचारतैव, रहस्यदूषणे हि रहस्यमाकारादिना विज्ञायानधिकृत एव प्रकाशयति इह तु मन्त्रयितैव स्वयं मन्त्रं भिनत्तीत्यनयोर्भेदः, इति तृतीयोऽतिचारः, तथा कूटस्य-असद्भूतस्य लेखो-लेखनं कूटलेखस्तस्य करणम्, एतच्च यद्यपि कायेनासत्यां वाचं न [1]वदामीत्यस्य, न वदामि न वादयामीत्यस्य वा व्रतस्य भङ्ग एव तथापि सहसाकारानाभोगादिनाऽतिक्रमादिना वाऽतिचारः, अथवा सत्यमित्यसत्यभणनं मया प्रत्याख्यातम् इदं तु लेखनमिति भावनया व्रतसव्यपेक्षस्यातिचार एवेति चतुर्थोऽतिचारः, मृषा—अलीकं तस्योपदेशो मृषोपदेशः, इदं च 'एवं च एवं च ब्रूहि त्वं एवं च एवं च अभिदध्याः कुलगृहेष्वि'त्यादिकमसत्याभिधानशिक्षाप्रदानमित्यर्थः, इह व्रतसंरक्षणबुद्ध्या परवृत्तान्तकथनद्वारेण मृषोपदेशं यच्छतः पञ्चमोऽतिचारः, व्रतसव्यपेक्षत्वेन मृषावादे परप्रवर्तनेन च भग्नाभग्नरूपत्वादस्य उपलक्षणत्वान्निकृतिप्रधानशास्त्राध्यापनमप्यतिचारः, इति मृषादोषाः—द्वितीयव्रतातिचाराः[2] ॥२७५॥

१ वदामीत्यस्य न वादयामि मु० ॥ तुलना—योगशास्त्रटीका (३।६१) ॥

२ तत्वार्थसूत्रे तु—मिथ्योपदेश-रहस्याभ्याख्यान-कूटलेखक्रिया-न्यासापहार-साकारमन्त्रभेदाः ।७।२०। इति प्रकारान्तरेण पञ्चातिचारा दर्शिताः ॥

[1]अथ तृतीयव्रतातीचारानाह–

**चोराणीय १ चोरपयोगजं २ कूडमाण-तुलकरणं ३ ।**
**रिउरज्जव्ववहारो ४ सरिसजुई ५ तइयवयदोसा ॥२७६॥**

'चोराणीयमि'त्यादि, चौरैरानीतम्–आहृतं चौरानीतं कनकवसनादि, अत्र च सूत्रे आदानपदाध्याहारात्तस्यादानं–मूल्येन मुधिकया वा ग्रहणम्, चौरानीतं हि काणक्रयेण मुधिकया वा प्रच्छन्नं गृह्णन् चौर एव भवति, ततश्च चौर्यकरणाद् व्रतभङ्गः, वाणिज्यमेव मया विधीयते न साक्षाच्चौरिकेत्यध्यवसायेन व्रतसापेक्षत्वाच्च न भङ्ग इति भङ्गाभङ्गरूपः प्रथमोऽतीचारः १, तथा चौराणां प्रयोजनं–व्यापारणं चौरप्रयोगः–हरत यूयमिति हरणक्रियायां प्रेरणा, अथवा चौराणां प्रयोगाः–उपकरणानि कुशिका-कर्तरिका-घर्घरिकादीनि तेषामर्पणं विक्रयणं वा उपचाराच्चौरप्रयोगः, ततो जातश्चौरप्रयोगजोऽतिचारः, प्राकृतत्वाच्च नपुंसकत्वम्, अत्र यद्यपि चौर्यं न करोमि न कारयामीत्येवंप्रतिपन्नस्य व्रतस्य चौरप्रयोगो व्रतभङ्ग एव तथापि किमधुना यूयं निर्व्यापारास्तिष्ठथ ? यदि भवतां भोजनादिकं नास्ति तदाऽहं तद्ददामि भवदानीतमोषस्य वा यदि विक्रायको न विद्यते तदाऽहं तं विक्रेष्ये इत्येवंविधवचनैश्चौरान् व्यापारयतः स्वयं च चौर्यव्यापारं परिहरतो व्रतसापेक्षस्यासावतिचार इति द्वितीयः २, तथा मीयतेऽनेनेति मानं–कुडव-पल-हस्तादि तुला तु प्रसिद्धैव मानं च तुला च मान-तुले कूटे च ते मान-तुले च कूटमान-तुले तयोः करणं–हीनेन मानेन ददाति अधिकेन मानेन च गृह्णाति एवं तुलयाऽपीति तृतीयः ३, तथा रिपोः–द्विषः सम्बन्धिनि राज्ये–नियमिते भूमिभागे कटके वा व्यवहारो–व्यवस्थातिक्रमेण व्यवहरणम्, इह च यद्यपि स्वस्वामिनाऽननुज्ञातस्य परकटकादिप्रवेशस्य



१ तुलना योगशास्त्रटीका (३।९२) धर्मसङ्ग्रह (भा० १-१०३)॥

[1] 'सामिजीवादत्तं तित्थयरेणं तहेव य गुरूहिं । एयस्स उ जाऽविरई अदिन्नदाणे सरूवं तं ॥१॥"
इत्यदत्तादानलक्षणयोगेन विरुद्धराज्यव्यवहारकारिणां च चौर्यदण्डयोगेनादत्तादानव्रतभङ्ग एव तथापि विद्वेषिनृपतिभूमौ मया वाणिज्यमेव क्रियते न चौर्यमिति भावनया व्रतसापेक्षत्वाल्लोके च चौरोऽयमिति व्यपदेशाभावादतिचारतेति चतुर्थः ४, तथा सदृशयुतिः- सदृशानां वस्तूनां युतिः-मिश्रीकरणं यथा व्रीहिषु पलञ्जिकान्, घृते वसादि, तैले मूत्रादि, सिक्तादि अच्छधवलपण्डिकायां, जात्यसुवर्णरूप्ययोर्युक्तिसुवर्णरूप्ये मिश्रयित्वा व्यवहरतीति पञ्चमः, अत्र च कूटमान-तुलादिव्यवहारः सदृशयुतिश्च परव्यंसनेन परधनग्रहणरूपत्वाद्भङ्ग एव केवलं खात्रखननादिकमेव [2]चौर्यं प्रतिषिद्धं मया वणिक्कलैव कृतेति भावनया व्रतरक्षणोद्यतत्वादतिचारता ५, इति तृतीयव्रतेऽतिचाराः ॥२७६॥

इदानीं **चतुर्थव्रतातिचारानाह**–

**भुंजइ इतरपरिग्गह १ मपरिग्गहियं थियं २ चउत्थवए ।**
**कामे तिव्वहिलासो ३ अणंगकीला ४ परविवाहो ५ ॥२७७॥**

'भुंजई' त्यादि, इत्वरमल्पमुच्यते, ततः इत्वरम्–अल्पं परिग्रहो यस्याः सा इत्वरपरिग्रहा, इत्वरकालं परिग्रहो यस्याः सा, तथा कालशब्दलोपोऽत्र दृश्यः, अथवा इत्वरी–प्रतिपुरुषमयनशीला वेश्येत्यर्थः परिगृह्यत इति परिग्रहा–कञ्चित्कालं भाटीप्रदानादिना संगृहीता इत्वरी चासौ परिग्रहा च सा तथा, पुंव-

१ स्वामिजीवादत्तं तीर्थकरेण तथैव गुरुभिरदत्तम् । एतस्माद् याऽविरतिः अदत्तादानस्यैतत् स्वरूपम् ॥१॥
२ चौर्यं प्रसिद्धम्, मया तु वणि० इति च धर्मसङ्ग्रहे (भा० १, पृ० १०४) योगशास्त्रे (३।९३) पाठः ॥

द्भावश्चात्र कार्यः, तां यद्भुङ्क्ते–सेवते गृहीतचतुर्थव्रतः सोऽतिचारः, इयमत्र भावना--भाटीप्रदानादित्वरकालं स्वीकारेण स्वकलत्रीकृतस्य वेश्यां सेवमानस्य स्वमतिकल्पनया स्वदारत्वेन व्रतसापेक्षचित्तत्वान्न भङ्गः, अल्पकालं परिग्रहाच्च वस्तुतोऽन्यकलत्रत्वाद्भङ्ग इति भङ्गाभङ्गरूपत्वादित्वरपरिग्रहां सेवमानस्य प्रथमोऽतिचारः १, तथा अपरिगृहीता–अगृहीतान्यसत्कभाटिर्वेश्या प्रोषितभर्तृका स्वैरिणी कुलाङ्गना वाऽनाथा तां 'थियं'ति स्त्रियं स्थितां वा, एवंविधां सतीं यो भुङ्क्ते सोऽतिचार इति सण्टङ्कः, अयं चानाभोगादिना अतिक्रमादिना वा अतिचारः २,

एतौ च द्वावप्यतिचारौ स्वदारसन्तोषिण एव न तु परदारवर्जकस्य इत्वरपरिग्रहाया वेश्यात्वेन अपरिगृहीतायास्त्वनाथतयैव परदारत्वाभावात् शेषास्त्वतिचारा द्वयोरपीति [1]हरिभद्रसूरिमतम्, एतदेव च सूत्रानुपाति, यदाह–"सदारसंतोसस्स इमे पंच अइयारा जाणियव्वा न समायरियव्व"त्ति, अन्ये त्वाहुः–इत्वरपरिग्रहासेवनं स्वदारसन्तोषिणोऽतीचारो यथा पूर्वं व्याख्यातस्तथैव, अपरिग्रहासेवनं तु परदारवर्जिनोऽतीचारः, अपरिग्रहा हि वेश्या, यदा च तां गृहीतान्यसत्कभाटिकामभिगच्छति तदा परदारगमनदोषसम्भवात् कथञ्चित्परदारत्वाच्च भङ्गत्वेन वेश्यात्वाच्चाभङ्गत्वेन भङ्गाभङ्गरूपोऽतीचारः इति द्वितीयः, परे पुनरन्यथा प्राहुर्यथा—

---

१ द्रष्टव्या आवश्यकसूत्रस्य हारिभद्री वृत्तिः (पृ० ८२५ B) ॥

[1]"परदारवज्जिणो पंच होंति तिन्नि उ सदारसंतुट्ठे । इत्थीए तिन्नि पंच व भङ्गविगप्पेहिं अइयारा ॥१॥"
इयमत्र भावना—इत्वरकालं या परेण भाट्यादिना परिगृहीता वेश्या तां गच्छतः [2]परदारवर्जिनो भङ्गः, कथंचित्परदारत्वात्तस्याः, लोके तु परदारत्वारूढेर्न भङ्ग इति भङ्गाऽभङ्गरूपोऽतीचारः, अपरिगृहीताया-मनाथकुलाङ्गनायां यद्गमनं परदारवर्जिनः सोऽप्यतीचारः तत्कल्पनया परस्य भर्तुरभावेनाऽपरदारत्वाद-भङ्गः, लोके च परदारतया रूढेर्भङ्ग इति पूर्ववदतीचारः, शेषास्तु त्रयोऽतीचारा द्वयोरपि भवेयुः, स्त्रियास्तु स्वपुरुषसन्तोष-परपुरुषवर्जनयोर्न भेदः, स्वपुरुषव्यतिरेकेणान्येषां परपुरुषत्वात्, अन्यविवाहनादयस्तु त्रयः स्वदारसन्तोषिण इव स्वपुरुषविषयाः स्युरिति, पञ्च वा, कथं ?, आद्यस्तावद्यदा स्वकीयपतिर्वारकदिने सपत्न्या परिगृहीतो भवति तदा सपत्नीवारकं विलुप्य परिभुञ्जानाया अतीचारः, [3]द्वितीयस्तु अतिक्रमादिना परपु-रुषमभिसरन्त्या अतीचारः, ब्रह्मचारिण्या वा स्वपतिमतिक्रमादिना अभिसरन्त्या अतीचारः, शेषास्त्रयः स्त्रियाः पूर्ववदिति ।

तथा कामे—मदने तीव्रो—गाढोऽभिलाषः—परित्यक्तान्यसकलव्यापारस्य तदेकाध्यवसायता, रमणी-मुखकमल-कक्षोपस्थान्तरेष्ववितृप्ततया प्रक्षिप्य प्रजननं महतीं वेलां यावन्निश्चलो मृत [4]इवास्ते चटक इव चटकायां मुहुर्मुहुः कामिन्यामारोहतीति तृतीयः ३, तथा अनङ्गः-कामः, स च पुंसः स्त्री-पुं-नपुंसकसेव-

१ अपरे पुनरस्यन्यथा प्राहुः-सं. ॥ २ परदारवर्जिणो-मु० ॥ ३ अब्रह्मचारिणं-सं ॥
४ एवास्ते-जे. यो. टी. (३।९४) ॥

नेच्छा हस्तकर्मादीच्छा वा वेदोदयात्[1] । तथा स्त्रियोऽपि पुरुष-नपुंसक-स्त्रीसेवनेच्छा हस्तकर्मादीच्छा वा । नपुंसकस्यापि नपुंसक-पुरुष-स्त्रीसेवनेच्छा हस्तकर्मादीच्छा वा । तेन तस्मिन् वा क्रीडा—रमणमनङ्ग-क्रीडा स्वलिङ्गेन कृतकृत्योऽपि योषितामवाच्यदेशं भूयो भूयः [2]कुष्णाति केशाकर्षण-प्रहारदान-दन्त-नख-कदर्थनादिप्रकारैश्च मोहनीयकर्मावेशात्तथा क्रीडति यथा प्रबलो रागः समुज्जृम्भते, अथवा अङ्गं—देहावयवो मैथुनापेक्षया योनिर्मेहनं वा तद्व्यतिरिक्तान्यनङ्गानि-कुच-कक्षोरु-वदनादीनि तेषु क्रीडा, इह च श्रावकोऽत्यन्तपापभीरुतया ब्रह्मचर्यं चिकीर्षुरपि यदा वेदोदयासहिष्णुतया तत्कर्तुं न शक्नोति तदा यापनामात्रार्थं स्वदारसन्तोषादि प्रतिपद्यते, मैथुनमात्रेणैव च यापनायां सम्भवन्त्यां कामतीव्राभिलाषाऽनङ्गक्रीडे अर्थतः प्रतिषिद्धे, तत्सेवने च न कश्चिद् गुणः प्रत्युत राजयक्ष्मादयो दोषा एव भवन्ति, एवं प्रतिषिद्धाचरणाद्भङ्गः, निजनियमाबाधनाच्चाभङ्ग इत्येतावतीचारौ,

अन्ये त्वन्यथाऽतीचारद्वयमपि भावयन्ति—स हि स्वदारसंतोषी निधुवनमेव मया प्रत्याख्यातमिति स्वकल्पनया वेश्यादौ तत्परिहरति, नालिङ्गनादि, परदारवर्जिनोऽपि परदारेषु निधुवनं परिहरन्ति नालिङ्गनादि, इति कथञ्चिद् व्रतसापेक्षत्वादतीचाराविति ४, ।

तथा परेषाम्—अन्येषां स्वस्वाऽपत्यव्यतिरिक्तानां विवाहो—विवाहकरणं कन्याफललिप्सया स्नेहसंबन्धादिना वा परिणयनविधानम्, इदं च स्वकलत्रसन्तोषवता स्वकलत्रात् परदारवर्जकेन तु

१ याच्य तथा जे ॥ २ कुष्नाति-योगशास्त्रटीका (३।९४ पृ. १९४ A) धर्मसङ्ग्रहः (भा. १ पृ. १०५) ॥

इदानीं चतुर्थपङ्क्तिस्थापना—तत्र प्रथमगृहके वृषभजिन-भरतचक्रिणोर्द्वयोरप्युच्चत्वं कायस्य पञ्च धनुःशतानि, द्वितीयगृहके अजितजिन-सगरचक्रिणोर्द्वयोरप्युच्चत्वं चत्वारि धनुःशतानि सार्धानि, ततः परं [1]सम्भवादीनां जिनानां पञ्चाशत्पञ्चाशद्धनुःपरिहाणिस्तावद्यावत्पुष्पदन्तः—सुविधिजिनो धनुःशतमेकं भवेदुच्चः, अयमर्थः—तृतीयगृहके सम्भवजिनस्य चत्वारि धनुःशतानि देहमानम्, चतुर्थगृहके अभिनन्दनस्य त्रीणि धनुःशतानि सार्धानि, पञ्चमगृहके सुमतिजिनस्य त्रीणि धनुःशतानि, षष्ठगृहे पद्मप्रभस्य द्वे धनुःशते सार्धे, सप्तमगृहे सुपार्श्वस्य द्वे धनुःशते, अष्टमगृहे चन्द्रप्रभस्य धनुःशतं सार्धम्, नवमगृहके धनुःशतमेकं सुविधेरिति, ततो दशमगृहके शीतलस्य नवतिर्धनूंषि, पुरतः—अनन्तरं श्रेयांस-त्रिपृष्ठादीनां यावद्धर्मजिन-पुरुषसिंहौ तावत्तेषामुच्चत्वमिदं—धनुरशीत्यादिकं क्रमशो भवति, अयमर्थः—एकादशे गृहके श्रेयांसजिन-त्रिपृष्ठवासुदेवयोरशीतिर्धनूंषि, ततो द्वादशके गृहके वासुपूज्यजिन-द्विपृष्ठ-वासुदेवयोः सप्ततिर्धनूंषि, ततस्त्रयोदशगृहे विमलजिन-स्वयम्भूवासुदेवयोः षष्टिर्धनूंषि, ततश्चतुर्दशगृहके अनन्तजिन-पुरुषोत्तमवासुदेवयोः पञ्चाशद्धनूंषि, ततः पञ्चदशगृहके धर्मजिन-पुरुषसिंहवासुदेवयोः पञ्चचत्वारिंशद्धनूंषीति, तथा षोडशकगृहे मघवतश्चक्रवर्तिनो द्विचत्वारिंशद्धनूंषि तदर्धं च, हस्तद्वय-मित्यर्थः, सप्तदशगृहके एकचत्वारिंशद्धनूंषि तदर्धं च सनत्कुमारचक्रवर्तिनः, अष्टादशे गृहे शान्तिजिनस्य परिपूर्णानि चत्वारिंशद्धनूंषि, एकोनविंशे गृहके कुन्थुजिनेन्द्रस्य पञ्चत्रिंशद्धनूंषि, विंशतितमे गृहके त्रिंशद्धनूंषि अरजिनस्य, तत एकविंशतितमे गृहके पुरुषपुण्डरीकस्य वासुदेवस्य एकोनत्रिंशद्धनूंषि, द्वाविंशति-

१ शमवादीनां-सं.॥

तमगृहे सुभूमचक्रवर्तिनोऽष्टाविंशतिर्धनूंषि, त्रयोविंशतितमगृहके दत्तस्य वासुदेवस्य षड्विंशतिर्धनूंषि, चतुर्विंशे गृहे मल्लिजिनस्य पञ्चविंशतिर्धनूंषि, पञ्चविंशतितमे गृहके सुव्रतजिन-महापद्मचक्रवर्तिनोर्विंशतिर्धनूंषि, षड्विंशतितमे गृहके नारायणवासुदेवस्य षोडश धनूंषि, सप्तविंशतितमे गृहे नमिनाथ--हरिषेणचक्रिणोः पञ्चदश धनूंषि, अष्टाविंशतितमे गृहे जयचक्रवर्तिनो द्वादश धनूंषि, एकोनत्रिंशत्तमे गृहे नेमिजिन-कृष्णाभिधानवासुदेवयोर्दश धनूंषि उच्चत्वम् ; त्रिंशत्तमे गृहे ब्रह्मदत्तचक्रिणः सप्त धनूंषि, एकत्रिंशे गृहके पार्श्वजिनस्य नव रत्नयः-हस्ताः, द्वात्रिंशत्तमगृहके श्रीवीरजिनस्य सप्त हस्तास्तनुमानम् ॥

एवमुच्चत्वं चतुर्थपङ्क्तौ सर्वेषां प्रथमजिनादीनां भणितम्, इदानीं पञ्चमपङ्क्तिगृहकनिविष्टं सर्वेषां जिनादीनां क्रमेणायुष्कं वक्ष्यामि, तदेवाह—'उसह-भरहाणं' इत्यादि, वृषभजिन-भरतचक्रिणोर्द्वयोरपि प्रथमगृहके चतुरशीतिः पूर्वाणां शतसहस्राणि—लक्षाणि आयुः, द्वितीयगृहके अजितजिन--सगरचक्रिणोर्द्वयोरपि द्विसप्ततिः पूर्वलक्षाणि, इतः पुरतो यथाक्रमं सम्भवादिजिनानां परिपाट्या षष्टिः, पञ्चाशच्चत्वारिंशत्, त्रिंशत्, विंशतिर्दश, द्वे, एकं लक्षं पूर्वाणामिति, अयमर्थः—तृतीये गृहके सम्भवस्य षष्टिः पूर्वलक्षाः सर्वायुः, चतुर्थगृहके अभिनन्दनस्य पञ्चाशत्पूर्वलक्षाः, पञ्चमगृहे सुमतिजिनस्य चत्वारिंशत्पूर्वलक्षाः, षष्ठगृहे पद्मप्रभस्य त्रिंशत्पूर्वलक्षाः, सप्तमगृहे सुपार्श्वस्य विंशतिः पूर्वलक्षाः, अष्टमगृहे चन्द्रप्रभस्य दश पूर्वलक्षाः, नवमगृहे सुविधेर्द्वे पूर्वलक्षे, दशमगृहे शीतलस्य एकं पूर्वलक्षमिति, तथा एकादशे गृहे श्रेयांसजिन-त्रिपृष्ठवासुदेवयोश्चतुरशीतिर्वर्षलक्षाः, पुरतः—अनन्तरं जिन--केशीनां—तीर्थकृद्वासुदेवानां यावद्धर्म-पुरुषसिंहौ तावत्परस्परं तुल्यमिदमायुः, तदेव दर्शयति—'कमसो'

इत्यादि, क्रमशः—परिपाटया द्विसप्ततिः, षष्टिस्त्रिंशत्, दशैव शतसहस्राणि—वर्षलक्षाणि, अयमर्थः—द्वादशे गृहे वासुपूज्य-द्विपृष्ठवासुदेवयोर्द्विसप्ततिर्वर्षलक्षाः, त्रयोदशे गृहे विमलजिन-स्वयम्भूवासुदेवयोः षष्टिर्वर्षलक्षाः, चतुर्दशे गृहे अनन्तजिन-पुरुषोत्तमवासुदेवयोस्त्रिंशद्वर्षलक्षाः, पञ्चदशे गृहे धर्मजिन-पुरुषसिंहवासुदेवयोर्दश वर्षलक्षा इति, तथा षोडशे गृहके मघवतश्चक्रिणः पञ्च वर्षलक्षाः, सप्तदशे गृहके सनत्कुमारचक्रवर्तिनस्त्रीणि वर्षलक्षाणि, अष्टादशे गृहे शान्तिजिनचक्रवर्तिनो [1]वर्षलक्षमेकम्, एकोनविंशतितमगृहे कुन्थोर्जिनचक्रिणः पञ्चनवतिर्वर्षसहस्राः सर्वायुर्भणितम्, विंशतितमगृहे अरजिनस्य चक्रिणश्चतुरशीतिवर्षसहस्राण्यायुर्भवति, एकविंशतितमे गृहे पञ्चषष्टिर्वर्षसहस्राण्यायुः पुरुषपुण्डरीकवासुदेवस्य, द्वाविंशतितमगृहे षष्टिर्वर्षसहस्राः, सुभूमचक्रिणः, त्रयोविंशे गृहे षट्पञ्चाशद्वर्षसहस्रा भवन्ति दत्तस्य वासुदेवस्य, चतुर्विंशतितमे गृहे पञ्चपञ्चाशद्वर्षसहस्राणि मल्लिजिनस्याप्यायुर्भणितम्, पञ्चविंशतितमगृहे मुनिसुव्रतजिन--महापद्मचक्रिणोस्त्रिंशद्वर्षसहस्राण्यायुर्भणितम्, षड्विंशतितमगृहे द्वादश वर्षसहस्राण्यायुर्नारायणवासुदेवस्य भवेत्, सप्तविंशतितमगृहे दश वर्षसहस्राणि नमिजिन-हरिषेणचक्रिणोर्द्वयोरपि भवन्तीति, अष्टाविंशतितमगृहे त्रीणि वर्षसहस्राण्यायुर्जयनाम्नश्चक्रिणः, एकोनत्रिंशत्तमगृहे एकं वर्षसहस्रमायुर्नेमिजिन-कृष्णवासुदेवयोर्द्वयोरपि भवति, त्रिंशत्तमगृहे सप्त वर्षशतानि चक्रेश्वरब्रह्मदत्तस्य, एकत्रिंशत्तमगृहे वर्षशतं पार्श्वजिनस्य, द्वात्रिंशत्तमगृहे च वर्षाणि द्विसप्ततिर्वीरजिनस्य सर्वायुरिति द्वात्रिंशद् गृहकाणि समयविधानेन भणितानि । ॥४१०-४२६॥ ३५॥



१ वर्षलक्षाणामेकं सं. ॥

स्थापना चेयम्—

| जिनाः | चक्रिणः | वासुदेवाः | तनुमानं | आयु० ८४ |
|---|---|---|---|---|
| १ | १ | ० | ५०० ध | लक्षपूर्वाणि |
| २ | २ | ० | ४५० ध | ७२ " |
| ३ | ० | ० | ४०० ध. | ६० " |
| ४ | ० | ० | ३५० ध. | ५० " |
| ५ | ० | ० | ३०० ध. | ४० " |
| ६ | ० | ० | २५० ध. | ३० " |
| ७ | ० | ० | २०० ध | २० " |
| ८ | ० | ० | १५० " | १० " |
| ९ | ० | ० | १०० " | २ " |
| १० | ० | ० | ९० " | १ " |
| ११ | ० | १ | ८० " | ८४वर्षल० |

| जि० | च० | वा० | तनु० | आयु० |
|---|---|---|---|---|
| १२ | ० | २ | ७० ध. | ७२ वर्षल० |
| १३ | ० | ३ | ६० " | ६० " |
| १४ | ० | ४ | ५० " | ३० " |
| १५ | ० | ५ | ४५ " | १० " |
| ० | ३ | ० | ४२॥" | ५ " |
| ० | ४ | ० | ४१॥" | ३ " |
| १६ | ५ | ० | ४० " | १ " |
| १७ | ६ | ० | ३५ " | ९५००० वर्षाणि |
| १८ | ७ | ० | ३० " | ८४००० " |
| ० | ० | ६ | २९ " | ६५००० " |
| ० | ८ | ० | २८ " | ६०००० " |

| जि० | च० | वा० | तनु० | आयु० |
|---|---|---|---|---|
| ० | ० | ७ | २६ ध. | ५६००० वर्षाणि |
| १९ | ० | ० | २५ " | ५५००० " |
| २० | ९ | ० | २० " | ३०००० " |
| ० | ० | ८ | १६ " | १२००० " |
| २१ | १० | ० | १५ " | १०००० " |
| ० | ११ | ० | १२ " | ३००० " |
| २२ | ० | ९ | १० " | १००० " |
| ० | १२ | ० | ७ " | ७०० " |
| २३ | ० | ० | ९ हस्ताः | १०० " |
| २४ | ० | ० | ७ " | ७२ " |

इदानीं 'तित्थ[1]वुच्छेओ' त्ति षट्त्रिंशत्तमं द्वारमाह—

**पुरिमंतिमअट्ठट्ठंतरेसु तित्थस्स नत्थि वोच्छेओ ।**
**मज्झिल्लएसु सत्तसु [2]एत्तियकालं तु वुच्छेओ ॥४३०॥**

१ वोच्छेओ-मु. ॥ २ इत्तिय-ता. ॥

[1]चउभागं चउभागो तिन्नि य चउभाग पलियचउभागो ।
तिण्णेव य चउभागा चउत्थ भागो य चउभागो ॥४३१॥

'पुरी' त्यादि गाथाद्वयम्, इह हि चतुर्विंशतेस्तीर्थकृतां त्रयोविंशतिरेवान्तराणि भवन्ति, यथा चतसृणामङ्गुलीनां त्रीण्येवान्तराणि, तत्र पूर्वेषु श्रीऋषभादीनां सुविधिपर्यन्तानां नवानां तीर्थकृतां सम्बन्धिषु अष्टसु, अन्तिमेषु च—शान्तिनाथादीनां महावीरान्तानां नवानां जिनानां सम्बन्धिषु अष्टस्वन्तरेषु 'तीर्थस्य' चतुर्वर्णस्य श्रमणसङ्घस्य नास्ति व्यवच्छेदः, **'मज्झिल्लएसु'** त्ति मध्यवर्तिषु पुनः सुविधि-प्रभृतीनां शान्तिनाथपर्यन्तानां तीर्थकृतामन्तरेषु सप्तसु एतावन्मात्रं वक्ष्यमाणं कालं यावत्तीर्थस्य व्यवच्छेदः । तदेवाह—**'चउभागं'** इत्यादि, सुविधि-शीतलयोरन्तरे पल्योपमस्य चतुर्भागीकृतस्य एकश्चतुर्भागस्तावत्कालं तीर्थव्यवच्छेदः, अर्हद्धर्मवार्ताऽपि तत्र नष्टेत्यर्थः, तथा शीतल-श्रेयांसयोरन्तरे [2]पल्योपमस्य चतुर्भागस्तीर्थव्यवच्छेदः, तथा श्रेयांस वासुपूज्ययोरन्तरे पल्योपमसम्बन्धिनस्त्रयश्चतुर्भागास्तीर्थव्यवच्छेदः, तथा श्रीवासुपूज्य-विमलजिनयोरन्तरे पल्योपमस्य चतुर्भागस्तीर्थव्यवच्छेदः, तथा विमला-ऽनन्तजिनयोरन्तरे पल्योपमसम्बन्धिनस्त्रयश्चतुर्भागास्तीर्थव्यवच्छेदः, तथाऽनन्तधर्मयोरन्तरे[3] पल्योपमस्य चतुर्भागस्तीर्थव्यवच्छेदः, तथा धर्म-शान्तिनाथयोरन्तरे पल्योपमचतु-

१ केचित्पल्योपमान्याहुः पल्यतुर्यांशकास्पदे ॥ लो. प्र. ३२-१०२६॥ तथाहुः सप्ततिशतस्थानके-' इग-इग-तिगेग-तिग-इगइगस इइ गारपलिअचउभागे । बिंतिन्ने इअ पलिए सुविहाइसु सत्ततित्थंते (गाथा २१३) लो. प्र. ॥३२-१०२७॥
२ पल्योपमस्य चतुर्भागीकृतस्य चतुर्भाग०-मु. ॥ ३ ०रंतरा०-मु० ॥

भागस्तीर्थव्यवच्छेद इति, सर्वाग्रेण भागमीलने त्रीणि पल्योपमानि एकचतुर्भागहीनानि जातानि इति षड्त्रिंशत्तमं द्वारम् ॥ ४३०-४३१ ॥३६॥

इदानीं 'दस आसायण' त्ति सप्तत्रिंशत्तमं द्वारमाह—

[1]तंबोल १ पाण २ [2]भोयण ३ पाणह ४ थीभोग ५ [3]सुयण ६ निट्ठवणे ७ ।
मुत्तु ८ च्चारं ९ जूयं १० वज्जे जिणमंदिर[4]स्संतो ॥४३२॥

'तंबोले' त्यादि गाथा, ताम्बूल-पान-भोजनोपानत्स्त्रीभोग-स्वपन-निष्ठीवनानि मूत्रं—प्रश्रवणम् , उच्चारं-पुरीषम् , द्यूतम्-अन्धकादि वर्जयेत् तीर्थकृदाशातनाहेतुत्वाज्जिनमन्दिरस्यान्तर्विवेकी जन इति ॥४३२॥३७॥

३७ द्वारे आशातनानां दशकं गाथा ४३२

'आसायणा उ चुलसी' इति अष्टात्रिंशत्तमं द्वारमाह—

[5]खेलं १ केलि २ कलिं ३ कला ४ कुललयं ५ तंबोल ६ मुग्गालयं ७,
गाली ८ कंगुलिया ९ सरीरधुवणं १० केसे ११ नहे १२ लोहियं १३ ।
भत्तोसं १४ तय १५ पित्त १६ वंत १७[6]दसणे १८[7]विस्सामणं १९ दामणं २०,
[8]दंत २१ ऽच्छी २२ नह २३ [9]गंड २४ नासिय २५ सिरो २६ [10]सोत २७ च्छवीणं मलं २८॥४३३॥

३८ द्वारे चतुरशीतिः गाथा ४३३-४३६ प्र.आ. १०४

१ तुलना-श्राद्धविधिटीका (पृ ७१), धर्मसङ्ग्रहवृत्तिः (भा १।पृ. १६४A) धर्मरत्न प्र. देवेन्द्रसूरिटीका-पृ. २१६A ॥
२ भोभणु-वाहण-श्राद्ध.टी. । भोभण-वाहण ध.सं. टीका ॥ ३ सुवण्ण-निट्ठवणं-श्राद्ध. टी. । सुवण-निट्ठुवणं-ध.सं.टीका ॥
४ ०स्सते-ध.सं. टी. ॥ ५ तुलना-श्राद्धविधिटीका (पृ.७१), धर्मसङ्ग्रहटीका (भा १-पृ. १०६४) ॥
६ 'दसणा'-इति श्राद्ध टी. ध. सं.टीका ॥ ७ 'विस्सामणा' इति ध.सं. टीका ॥ ८ 'दंत त्थी'-मु. ॥
९ 'गल्ल' श्राद्ध. टी. ध.सं. टी. ॥ १० सुत्त-श्राद्ध.टी. । सोत्त-ध. सं. टी. । साय छ. धर्म.प्र. टी. ॥

[1]मंतं २९ मीलण ३० [2]लेक्खयं ३१ विभजणं ३२ भंडार ३३ दुट्ठासणं ३४
छाणी ३५ कप्पड ३६ दालि ३७ पप्पड ३८ वडी विस्सारणं ३९ नासणं ४० ।
अक्कंदं ४१ विकहं ४२ [3]सरत्थघडणं ४३ तेरिच्छसंठावणं ४४,
अग्गीसेवण ४५ रंधणं ४६ परिखणं ४७ निस्सीहियाभंजणं ४८ ॥४३४॥
छत्तो ४९ वाणह ५० सत्थ ५१ चामर ५२ मणोऽणेगत्त ५३ मब्भंगणं ५४
सच्चित्ताणमचाय ५५ [4]चायमऽजिए ५६ दिट्ठीअ नो अंजलो ५७ ।
साडेगुत्तरसंगभंग ५८ मउडं ५९ [5]मउलिं ६० सिरोसेहरं ६१ ।
हुड्डा ६२ [6]जिंडुहगिड्डियाइरमणं ६३ जोहार ६४ भंडक्कियं ६५ ॥४३५॥
[7]रेक्कारं ६६ धरणं ६७ रणं ६८ विवरणं वालाण ६९ पल्हत्थियं ७०,
[8]पाऊ ७१ पायपसारणं ७२ [9]पुडपुडी ७३ पंकं ७४ रओ ७५ मेहुणं ७६ ।

१ 'मंतु म्मीलण-' मु. ता. धर्मरत्नप्र दे. टी. ॥ २ लिक्खयं-श्राद्ध. टी. ध. सं. टीका ॥ ३ सरच्छ० मु. । सरच्छु-ता. । सरुच्छ० श्राद्ध. टी. । सरुच्छु०-ध. स टीका ॥ ४ चायणऽजिए-मु. । चायमजिए दिट्ठीए-ता. । चायमजिए दिट्ठीइ-श्राद्ध-टी ध. स. टीका ॥
५ मोलिं-श्राद्ध.टी. ध.सं. टीका ॥ ६ जिंडुहगेड्डिआ० श्राद्ध. टी. ध. सं टीका ॥
७ रेकारं-मु. । रेक्कारं-श्राद्ध टी. ध.सं. टीका ॥ ८ पाओ-मु. । पाऊ-श्राद्ध. टी. ध. स. टीका ॥
९ पुडुपुडी-श्राद्ध.टी. ध. सं. टीका ॥

[1]जूया ७७ जेमण ७८ [2]जुज्झ (गुज्झ)७९ विज्ज ८० वणिजं ८१ [3]सेज्जं ८२ जलं ८३,
मज्जणं ८४ एमाईयमवज्जकज्जमुज्जुओ वज्जे जिणिंदालए ॥४३६॥

'खेलङ्केलि'मित्यादिशार्दूलवृत्तचतुष्टयम्, इदं च यथाविदितं व्याख्यायते–तत्र जिनभवने इदमिदं च कुर्वन्नाशातनां करोतीति तात्पर्यार्थः, आयं-लाभं ज्ञानादिनां निःशेषकल्याणसम्पल्लतावितानाऽविकलबीजानां शातयंति–विनाशयंतीत्याशातनाः, तत्र खेलं–मुखश्लेष्माणं जिनमन्दिरे त्यजति १, तथा केलिं–क्रीडां करोति २, तथा कलिं–वाक्कलहं विधत्ते ३ तथा कलां–धनुर्वेदादिकां खलूरिकायामिव तत्र शिक्षते ४, तथा कुललयं–गण्डूषं विधत्ते ५, तथा ताम्बूलं तत्र चर्वयति ६, तथा ताम्बूलसम्बन्धिनमुद्गालमाविलं तत्र मुञ्चति ७, तथा गालीः–जकार-मकारादिकास्तत्र ददाति ८, तथा कङ्गुलिकां–लघ्वीं महतीं च नीतिं विधत्ते ९, तथा शरीरस्य [4]धावनं–प्रक्षालनं कुरुते १०, तथा केशान् मस्तकादिभ्यस्तत्रोत्तारयति ११, तथा नखान् हस्त-पादसम्बन्धिनः किरति १२, तथा लोहितं शरीरान्निर्गतं तत्र विसृजति १३, तथा भक्तोषं–सुखादिकां तत्र खादति १४, तथा त्वचं व्रणादिसम्बन्धिनीं पातयति १५, तथा पित्तं–धातुविशेषमौषधादिना तत्र पातयति १६, तथा वान्तं–वमनं करोति १७, तथा दशनान्–दन्तान् क्षिपति तत्संस्कारं वा कुरुते १८, तथा विश्रामणाम्–अङ्गे संबाधनं कारयति १९, तथा दामनं–बन्धनमजादितिरश्चां विधत्ते २०, तथा दन्ता

१ जूअ-श्राद्ध. टी. ध सं. टीका ॥ २ गुज्झ-श्राद्ध. टी, ध. सं. टीका ॥ ३ सिज्जं-ता. श्राद्ध. टी., ध. सं. टीका ॥
४ धवनप्र०-सं. ॥

ऽक्षि-नख-गण्ड-नाशिका-शिरः-श्रोत्र-च्छवीनां सम्बन्धिनं मलं जिनगृहे त्यजति २१-२८, तत्र छविः–शरीरम्, शेषाश्च तदवयवा इति प्रथमवृत्तम् ॥४३३॥

तथा मन्त्रं–भूतादिनिग्रह[1]लक्षणं राजादिकार्यपर्यालोचनरूपं वा कुरुते २९, तथा मीलनं–क्वापि स्वकीयविवाहादिकृत्यनिर्णयाय वृद्धपुरुषाणां तत्रोपवेशनम् ३०, तथा लेख्यकं व्यवहारादिसम्बन्धि तत्र कुरुते ३१, [2]तथा विभजनं–विभागं दायादादीनां तत्र विधत्ते ३२, तथा भाण्डागारं निजद्रव्यादेर्विधत्ते ३३, तथा दुष्टासनं–पादोपरिपादस्थापनादिकमनौचित्योपवेशनं कुरुते ३४, तथा छाणी–गोमयपिण्डः ३५, कर्पटं–वस्त्रम् ३६, दालिः–मुद्गादिद्विदलरूपा, पर्पट-वटिके प्रसिद्धे, तत एतेषां विसारणम्–उद्वापनकृते विस्तारणम् ३७-३९, तथा नाशनं–नृपदायादादिभयेन चैत्यस्य गर्भगृहादिष्वन्तर्धानम् ४०, तथा आक्रन्दं–रुदितविशेषं पुत्र-कलत्रादिवियोगे तत्र विधत्ते ४१, तथा [3]विकथां–विविधां कथां रमणीयरमण्यादिसम्बन्धिनीं कुरुते ४२, तथा शराणां–बाणानामीक्षूणां च घटनम्, ❀ सरत्थति' पाठे तु शराणां अस्त्राणां च धनुःशरादीनां घटनम् ४३, तथा तिरश्चाम्–अश्व-गवादीनां संस्थापनम् ४४, तथा अग्निसेवनं शीतादौ सति ४५, तथा रन्धनं–[4]पचनमन्नादीनाम् ४६, तथा परीक्षणं द्रम्मादीनाम् ४७, तथा [5]नैषेधिकीभञ्जनम् अवश्यमेव हि चैत्यादौ प्रविशद्भिः सामाचारीचतुरैर्नैषेधिकी करणीया, ततस्तस्या

१ ०लक्षण त राजा० स. ॥ २ तथा राजादिकाय विभजनं-जे. । राजादिकार्यविभजनं-इति श्राद्ध. टी ॥
३ विकथा-विविधाः कथा रमण्यादिसम्बधिनी-स. ॥ -❀'सरच्छेति' मु. ॥ ४ पाचन -सं. ॥
५ 'कृतायामपि नैषेधिक्यां सावद्यव्यापारकरणादि ४८' इति धर्मसङ्ग्रहे: (भा. १ । पृ १६५B) ॥

अकरणं–भञ्जनमाशातनेति द्वितीयवृत्तार्थः ४८ ॥४३४॥

तथा छत्रस्य तथा उपानहोस्तथा शस्त्राणां–खड्गादीनां तथा चामरयोश्च देवगृहाद्बहिरमोचनं मध्ये वा धारणम् ४९–५२, तथा मनसोऽनेकान्तता–अनैकाग्र्यं नानाविकल्पकल्पनमित्यर्थः ५३, तथा अभ्यञ्जनं तैलादिना ५४, तथा सच्चित्तानां–पुष्प- ताम्बूल-पत्रादीनामत्यागो बहिरमोचनम् ५५, तथा त्यागः–परिहरणम् 'अजिए' इति अजीवानां [1]हार-रत्न-मुद्रिकादीनाम्, बहिस्तन्मोचने हि 'अहो भिक्षाचराणामयं धर्म' इत्यवर्णवादो दुष्टलोकैर्विधीयते ५६, तथा सर्वज्ञप्रतिमानां दृष्टौ दृग्गोचरतायां नो– [2]नैवाञ्जलिकरणम्–अञ्जलिविरचनम् ५७, तथा एकशाटकेन-एकोपरितनवस्त्रेण उत्तरासङ्गभङ्ग–उत्तरासङ्गस्याकरणम् ५८, तथा मुकुटं–किरीटं मस्तके धरति ५९, तथा मौलिं–शिरोवेष्टनविशेषरूपां करोति ६०, तथा शिरःशेखरं कुसुमादिमयं विधत्ते ६१, तथा [3]हुड्डां–पारापत-नालिकेरादि[4]सम्बन्धिनीं विधत्ते ६२, तथा [5]'जिंडुह' त्ति कन्दुकः गेड्डिका–तत्क्षेपणी वक्रयष्टिका ताभ्याम्, आदिशब्दाद्गोलिका-[6]कपर्दिकादिभिश्च रमणं–क्रीडनम् ६३, तथा ज्योत्कारकरणं पित्रादीनाम् ६४, तथा भाण्डानां–विटानां क्रिया–कक्षावादनादिका ६५, इति तृतीयवृत्तार्थः ॥४३५॥

---

१ हारमुद्रिका०-मु. ॥ २ निवाञ्जलि०-सं. ॥ ३ हुड्डी-सं.। हुडा-पणकरण तां पातयति' ६२ इति धर्म-सङ्ग्रहटीका (भा. १। पृ १६५B)॥ ४ ०सम्बधिनी-सं.
५ जिंडुह गड्डुका-सं.। 'जिंडहु दंडकः गेड्डिया ऊलकणः' इति विषमपद. टीका (३७B)॥ ६ कपर्दिकाभिश्च-मु. ॥

तथा रेकारं–तिरस्कारप्रकाशकं रे रे [1]रुद्रदत्तेत्यादि वक्ति ६६, तथा धरणकं–रोधनमपकारिणाम-धमर्णादीनां च ६७, तथा रणं–संग्रामकरणम् ६८, तथा विवरणं [2]वालानां–केशानां विजटीकरणम् ६९, तथा पर्यस्तिकाकरणम् ७०, तथा पादुका–काष्ठादिमयं चरणरक्षणोपकरणम् ७१, तथा पादयोः प्रसारणं स्वैरं निराकुलतायाम् ७२, तथा पुटपुटिकादापनम् ७३, तथा पङ्कं–कर्दमं करोति निजदेहा[3]वयवप्रक्षालनादिना ७४, तथा रजो–धूली तां तत्र पादादिलग्नां [4]शाटयति ७५, तथा मैथुनं–मिथुनस्य कर्म ७६, तथा यूका मस्तकादिभ्यः क्षिपति वीक्षयति वा तथा ७७, जेमनं–भोजनम् ७८, तथा गुह्यं–लिङ्गं तस्यासंवृतस्य करणम् [5]'जुज्झ' मिति तु पाठे युद्धं [6]दग्मुष्टि-बाहुयुद्धादि ७९, तथा 'विज्ज' त्ति वैद्यकम् ८०, तथा वाणिज्यं–क्रयविक्रयलक्षणम् ८१, तथा शय्यां कृत्वा तत्र स्वपिति ८२, तथा जलं–पयः तत्पानाद्यर्थं तत्र मुञ्चति पिबति वा ८३, तथा मज्जनं-स्नानं तत्र करोति ८४, एवमादिकमवद्यं–सदोषं कार्यम् ऋजुकः–प्राञ्जलचेता उद्यतो वा वर्जयेज्जिनेन्द्रालये–जिनमन्दिरे, 'एवमादिक' मित्यनेनेदमाह–न केवलमेतावत्य एवाशातनाः, किन्त्वन्यदपि यदनुचितं [7]हसन-वल्गनादिकं जिनालये तदप्याशातनास्वरूपं ज्ञेयम् ॥

नन्वेवं 'तंबोल-पाणे'त्यादिगाथयैवाशातनादशकस्य प्रतिपादितत्वाच्छेषाशातनानां चैतद्दशकोपलक्षितत्वेनैव ज्ञास्यमानत्वादयुक्तमिदं द्वारान्तरमिति चेत् , न, सामान्याभिधानेऽपि बालादिबोधनार्थं विभिन्नं

१ रुद्रदत्ते इत्यादि-स. ॥ २ वालाना--सं.॥
३ ०वयवक्षालना०-सं. श्राद्ध. टी. ॥ ४ शाटयति-स. ॥ ५ 'जुज्झंमी' ति-मु. ॥
६ दग्युद्ध बाहुयुद्धादि सं. ॥ ७ हसनचचनादिकं-सं. ॥

विशेषाभिधानं क्रियत एव, यथा ब्राह्मणाः समागताः वशिष्टोऽपि समागत इति सर्वमनवद्यम् ॥

नन्वेता आशातना जिनालये क्रियमाणा [1]गृहिणां कश्चन दोषमावहन्ति ? उतैवमेव न करणीयाः ?, तत्र ब्रूमः--न केवलं गृहिणां सर्वसावद्यकरणोद्यतानां भवभ्रमणादिकं दोषमावहन्ति, किन्तु निरवद्याचाररतानां मुनीनामपि दोषमावहन्तीत्याह—

**आसायणा उ भवभमणकारणं इय विभाविउं जईणो ।**
**मलमलिणत्ति न जिणमंदिरंमि निवसंति [2]इय समओ ॥४३७॥**
**दुब्भिगंधमलस्सावि, तणुरप्पेस ण्हाणिया ।**
**दुहा वायवहो वावि, तेणं ठंति न चेइए ॥४३८॥**
**तिन्नि वा कड्ढई जाव, थुइओ त्तिसिलोइया ।**
**ताव तत्थ अणुन्नायं, कारणेण परेण उ ॥४३९॥**

'आसायणाउ' इत्यादिगाथात्रयम्, [3]एताः आशातनाः परिस्फुरद्विविधदुःखपरम्पराप्रभवभवभ्रमण-कारणमिति विभाव्य—परिभाव्य यतयोऽस्नानकारित्वेन मलमलिनदेहत्वाच्च जैनमन्दिरे निवसन्तीति समयः-सिद्धान्तः ॥४३७॥

तमेव समयं व्यवहारभाष्योक्तं [4]दर्शयति--'दुब्भिगंधे' त्यादि, एषा तनुः स्नापितापि

१ गृहिणां कं कंचन-सं. ॥ २ इइ-ध. सं-टीका (भा. १ । पृ. १६६ A) ॥
३ एताः परि० मु. ॥ ४ दर्शयति एषा-मु. ॥

दुरभिगन्ध-मल-प्रस्वेदस्राविणी, तथा द्विधा वायुपथः-अधोवायुनिर्गम उच्छ्वास-निःश्वासनिर्गमश्च यद्वा मुखेन अपानेन च वायुवहो वापि- वातवहनं च, तेन कारणेन न तिष्ठन्ति यतयश्चैत्ये—जिनमन्दिरे ॥४३८॥

यद्येवं व्रतिभिश्चैत्येष्वाशातनाभीरुभिः कदाचिदपि न गन्तव्यम् । तत्राह—तिस्रः स्तुतयः कायोत्सर्गानन्तरं या दीयन्ते ता यावत्कर्षति—भणतीत्यर्थः । किंविशिष्टाः ? तत्राह—त्रिश्लोकिकाः-त्रयः श्लोकाः-छन्दोविशेषरूपा [1]अधिका न यासु ताः, तथा 'सिद्धाणं बुद्धाणं' इत्येकः श्लोकः, 'जो देवाणवि' इति द्वितीयः, 'एक्कोवि नमुक्कारो' इति तृतीय इति, अग्रेतनगाथाद्वयम्, स्तुतिश्च चतुर्थी गीतार्थाचरणेनैव क्रियते, गीतार्थाचरणं तु मूलगणधरभणितमिव सर्वं विधेयमेव सर्वैरपि मुमुक्षुभिरिति, तावत्कालमेव तत्र जिनमन्दिरेऽनुज्ञातमवस्थानं यतीनाम्, कारणेन पुनर्धर्मश्रवणाद्यर्थमुपस्थितभविकजनोपकारादिना परतोऽपि चैत्यवन्दनाया अग्रतोऽपि यतीनामवस्थानमनुज्ञातम्, शेषकाले तु साधूनां जिनाशातनादिभयान्नानुज्ञातमवस्थानं तीर्थकर-गणधरादिभिः । ततो व्रतिभिरप्येवमाशातनाः परिहियन्ते, गृहस्थैस्तु सुतरां परिहरणीया इति । [2]इयं च तीर्थकृतामाज्ञा, आज्ञाभङ्गश्च महतेऽनर्थाय सम्पद्यते, यदाहुः—

'आणाइच्चिय चरणं' [बृहत्कल्प भा. २४८८] इत्यादि ॥४३९॥ ॥३८॥

साम्प्रतम्, 'अट्ठ महापाडिहेराइं' ति एकोनचत्वारिंशत्तमं द्वारमाह—

**कंकिल्लि १ कुसुमवुट्ठी २ * दिव्वज्झुणि ३ चामरा ४ऽऽसणाइं ५ च ।**
**भावलय ६ भेरि ७ छत्तं ८ जयंति जिणपाडिहेराइं ॥४४०॥** [सप्ततिशत. प्र. २०८]

१ अधिकयेन-जे. । २ इयं तीर्थ-स. ।। * देव० मु. । दिव्वु० ता । दिव्व० सप्ततिशत. प्र. ।।

'कंकिल्ली'त्यादिगाथा, तत्र प्रतिहारा इव प्रतिहाराः—सुरपतिनियुक्ता देवास्तेषां कर्माणि—कृत्यानि प्रातिहार्याणि, 'वर्णदृढादिभ्यः 'ष्यञ्च'[पा-५-१-१२३] इति कर्मणि ष्यञ्, तान्यष्टौ, तद्यथा-उल्लसद्बहलपाटलपल्लवजालसर्वकालविकसदसमानकुसुमसमूहविनिःसरदविरलपरमपरिमलोद्गारभरसमाकृष्यमाणभ्रमद्भ्रमरनिकुरम्बरणरणारावशिशिरिकृतप्रणमद्भव्यजननिकरश्रवणविवरोऽतिमनोरमाऽऽकारशालिविशालशालः [2]कङ्केल्लिः अशोकतरुर्जिनस्योपरि देवैर्विधीयते १, तथा जलज-स्थलज-विकुर्वणाविरचितानां पञ्चवर्णानां विकस्वराणामधःकृतवृन्तानामुपरिमुखाणां कुसुमानां पुरुषजानुद्वयसंवृष्टिः क्रि (ग्रन्थाग्रं ४०००) यते २, तथा [3]सरसतरसुधारसमहोदरः सरभसविविधदेशापहृतमुक्ताऽपरव्यापारप्रसारितवदनैः कुरङ्गकुलैराकुलाकुलैरुत्कर्णैराकर्ण्यमानः सकलजनानन्दप्रमोददायी दिव्यो ध्वनिर्वितन्यते ३, तथा कमनीयकदलीकाण्डप्रकाण्ड[4]तन्तुमण्डली रुचिरचमरीचिकुरनिकुरम्बडम्बरीताऽतिजात्यविचित्रपवित्रनिःसपत्न[6]रत्नविसरविनिःसरत्कि[7]रणनिकुरम्बजालेन दिशि दिशि संसूत्र्यमाणेन्द्रचापकान्तकाञ्चनमयोद्दण्डरमणीया चारुचामर[8]श्रीर्विस्तार्यते ४, तथा अतिभास्वर[9]सटापाटलबन्धुरस्कन्धबन्धविकटप्रकटदंष्ट्राकरालसजीवायमानसिंहरूपाऽलङ्कृतमनेकप्रकाण्डरत्नखण्डविनिर्यद्दूर्य[10]किरणावलिविलुप्यमानविलसत्तमस्काण्डडम्बरं सिंहासनं चारुतरं

---

१ घण्वेतिकर्मणि घण्-जे । ष्यङ्वेति कर्म्मणि ष्यङ्-सं. । तुलना-'वर्णदृढादिभ्यष्ट्यण् च वा'(सि. है.७-१-५९)
२ कङ्केल्लितरु. अशोक० मु ॥ ३ सरससुधा० सं. ॥ ४ ०तनुमंडली० सं. ॥ ५ रुचिरमरीचिचिकुर० मु. ॥
६ ०रत्नविशतर विनिः० सं. ॥ ७ ०रणकुरलजालेन सं ॥ ८ ०श्रीर्वितायते-सं. ॥
९ ०सटपा० स. ॥ १० ०किरणावली० सं. ॥

विरच्यते ५, तथा शरत्कालविलसदखण्डमयूखमण्डलप्रचण्डचण्डमरीचिमण्डलमिव दुरालोकं तीर्थकरकायतः प्रकृतिभा[1]स्वरात्तदीयनिरुपमरूपाच्छादकमतुच्छं प्रभापटलं सम्पिण्ड्य जिनशिरसः पश्चाद्भागे मण्डलायमानं भामण्डलमातन्यते ६, तथा [2]तारतरविस्फारभाङ्कारभरितभुवनोदरविवरा भेरयो—महाढक्काः क्रियन्ते ७, तथा भूर्भुवःस्वस्त्रयैकसाम्राज्यसंसूचकं शरदिन्दुकुन्दकुमुदावदातं प्रलम्बमानमुक्ताफलपटलावचूलमालामनोरमं छत्रत्रयमतिपवित्रमासूत्र्यते ८, इत्यष्टौ प्रातिहार्याणि जिनेश्वराणां जयन्तीति ।

तत्र [3]कङ्केल्लिः श्रीमहावीरस्य द्वात्रिंशद्धनुरुच्छ्रितः, शेषाणां तु ऋषभस्वाम्यादीनां पार्श्वनाथपर्यन्तानां त्रयोविंशतेरपि तीर्थकृतां निजनिजशरीरमानाद् द्वादशगुणः, यदुक्तम्—

●"[4]उसभस्स तिन्नि गाउय बत्तीस धणूणि वद्धमाणस्स । सेसजिणाणमसोओ [5]सरीरओ बारसगुणो उ ॥१॥" इति ।

ननु महावीरस्यापि क्वापि निजशरीराद् द्वादशगुणोऽशोकपादपः प्रतिपाद्यते, यदुक्तमावश्यकचूर्णौ श्रीमहावीरसमवसरणप्रस्तावे—

△ "असोगवरपायवं जिणउच्चत्ताओ बारसगुणं सक्को विउव्वइ" [पृ. ३२५] त्ति ।

---

१ ०मासुर० मं ॥ २ तारतरस्फार० सं. ॥ ३ कङ्किल्लिः-सं ।

● ऋषभस्य त्रीणि गव्यूतानि द्वात्रिंशद्धनूंषि वर्धमानस्य । जिनानां शेषाणामशोकः शरीराद् द्वादशगुणः ॥१॥

४ तुलना-तिण्णे व गाउआइं चेइयरुक्खो जिणस्स उसभस्स । सेसाणं पुण रुक्खा सरीरओ बारसगुणा उ। समवायाङ्गम् (सू. १५७, गाथा ३७)॥ ५ सरीरउ-स. । ससरीरा-विषमपद. टीका ॥

△ अशोकवरपादपं जिनोच्चत्वाद् द्वादशगुणं शक्रो विकुर्वति ।

तत्कथमिदमुपपद्यते ? इति, [1]अत्रोच्यते, [2]केवलस्यैवाशोकतरोस्तत्र मानमुक्तम्, इह तु सालवृक्ष-सहितस्य, ततोऽत्रापि केवलो द्वादशगुण एव, स तु सप्तहस्तमानश्रीमहावीरशरीराद् द्वादशगुणीकृतः सन्नेक-विंशतिर्धनूंषि भवति, सालवृक्षोऽप्येकादशधनुःप्रमाणः, ततो मिलितानि द्वात्रिंशद्धनूंषि युज्यन्ते इति सम्प्रदायः। **समावायाङ्गे**ऽप्युक्तम्—

"बत्तीसं धणुयाइं चेइयरुक्खो उ वद्धमाणस्स। निच्चोउगो असोगो [3]उच्छन्नो सालरुक्खेणं ॥१॥"
[सू. १५७, गाथा ३६]

तट्टीका च '**निच्चोउगो**'त्ति "नित्यं—सर्वदा ऋतुरेव—पुष्पादिकालो यस्य स नित्यर्तुकः, '**असोगो**'त्ति अशोकाभिधानो यः समवसरणभूमिमध्ये भवति, '**उच्छन्नो सालरुक्खेणं**'ति अवच्छन्नः सालवृक्षेणेति अत एव वचनादशोकस्योपरि सालवृक्षोऽपि कथञ्चिदस्तीत्यवसीयत इति"।

तथा आयोजनभूमिकुसुमवर्षविषये कृपार्द्रीकृतचेतसः केचन प्रेरयन्ति—ननु विकचकान्तकुसुमप्रचय-निचितायां समवसरणभुवि जीवदयारसिकान्तःकरणानां श्रमणानां कथमवस्थान-गमनादिकं कर्तुं युज्यते ? जीवविघातहेतुत्वादिति। तत्र केचिदुत्तरयन्ति—तानि कुसुमानि सचित्तान्येव न भवन्ति, विकुर्वणयैव देवैस्तेषां विहितत्वादिति। एतच्चायुक्तम्, यतो न तत्र विकुर्वितान्येव पुष्पाणि भवन्ति, जलज-स्थलजानामपि कुसुमानां सम्भवात्, न चैतदनार्षम्—

---

१ तुलना समवसरणस्तवाऽवचूर्णिः,(लो. प्र. ३० । ६०६ तः ॥
२ केवलमस्यैवा०-मु. ॥ ३ ओच्छण्णो इति समवायाङ्गे पाठः ॥

△ "[1]विंटट्ठाइं सुरभिं जल-थलयं दिव्वकुसुम[2]नीहारिं । [3]पयरिंति समंतेणं दसद्ध[4]वण्णं [5]कुसुमवासं॥ १ ॥"
[आव. निर्युक्ति ५४६] ति सिद्धान्तवचनाद् ।

एवं श्रुत्वाऽपरे सहृदयंमन्या उत्तरयन्ति—यत्र व्रतिनस्तिष्ठन्ति न तत्र देशे देवाः पुष्पाणि किरन्तीति, एतदप्युत्तराभासम्, न खलु तपोधनैः काष्ठीभूतावस्थामालम्ब्य तत्रैव देशेऽवश्यं स्थातव्यम्, प्रयोजने गमनागमनादेरपि तत्र सम्भवादिति । तस्मान्निखिलगीतार्थसम्मतमिदमुत्तरमत्र-दीयते- [6]तत्रैकयोजनमात्रायां समवसरणधरणावपरिमितसुरासुरादिलोकसंमर्देऽपि न परस्परमाबाधा काचित्, तथा तेषामाजानुप्रमाणक्षिप्तानाममन्दमकरन्दसम्पत्सम्पादितानन्द[7]मन्दार-मुचुकुन्द-कुन्द-कुमुद कमलदल-मुकुल-मालती-विकच-विचकिलप्रमुखकुसुमसमूहानामप्युपरि सञ्चरिष्णौ स्थाष्णौ च मुनिनिकरे विविधजननिचये च न काचिदाबाधा प्रत्युत सुधारससिच्यमानानामिव [8]बहुतरसमुल्लासस्तेषामापनिपद्यते, अचिन्तनीयनिरुपमतीर्थंकर [9]प्रभावोज्जृम्भमाणप्रसादादेवेति ।

तथा दिव्यध्वनिविषये पूर्वपक्षचञ्चवः केचिदाचक्षते—ननु सकलजनाह्लाददायी जात्यशर्करा-द्राक्षादि-रसमिश्रितपरिक्वथितस्निग्धदुग्धरससहोदरस्तीर्थंकरस्यैव ध्वनिरसौ कथं प्रतिहारकृतत्वमस्य युज्यते ?, युक्तमिद

---

△ वृन्तस्थायिनीं सुरभिं जल-स्थलजानां दिव्यकुसुमगन्धनिर्हारिणीं दशार्धवर्णां कुसुमवृष्टिं समन्ततो विकिरन्ति ॥१॥

१ वेंट० आव. नि । विंटट्ठाइं सुरभिजलथलय- सं. ॥ २ ०णीहारीं-आव नि. ॥
३ पइरंति-आव. नि । पयरंति-विषमपद. टीका ॥ ४ ०वन्नं-आव. नि ॥ ५ कुसुमवुट्ठिं- मु. ॥
६ यथैकयोजन० मु. ॥ ७ ०मन्दारमचकुन्दकुन्दकुमुद० मु । ०मन्दारमुचुकुन्दकुमुद० स. ॥
८ बहुमानस० जे ॥ ९ प्रभावाद्विजृम्भण० सं. ॥

मुदितमुदारमतिभिः, तीर्थकृतां वाणी हि परम[1]मधुरिममनोरमपदार्थसार्थातिशायिशब्दशालिनी स्वभावत एव, परं यदा मालव-कैशिक्यादिग्रामरागैर्भव्यजनोपकाराय देशनां भगवान् विधत्ते तदा देवैरुभयपार्श्ववर्तिभिरति-मनोहरवेणु-वीणादिकलक्वणितकरणेन स एव तीर्थकरशब्दः कलतरः क्रियते, यथा मधुरगानप्रवृत्ततरुणतर-गायनीजनगीतरवोऽनवमवैणिक-वैणविकादिवीणा-वेण्वादिरवैरित्येतावतांऽशेन प्रतिहारदेवकृतत्वमस्य न विरुद्ध्यते इति सर्वं समञ्जसम् ॥४४०॥३९॥

इदानीं 'चउत्तीसातिसयाणं'ति चत्वारिंशत्तमं द्वारमाह—

रय-रोय-सेयरहिओ देहो १ धवलाइं मंस-रुहिराइं २ ।
आहारा नीहारा अद्दिस्सा ३ सुरहिणो सासा ४ ॥४४१॥
[2]जम्माउ इमे चउरो एक्कारसकम्मखयभवा इण्हिं ।
खेत्ते [3]जोयणमेत्ते तिजयजणो माइ बहुओऽवि ५ ॥४४२॥
नियभासाए नर-तिरि-सुराण धम्माऽवबोहया वाणी ६ ।
पुव्वभवा रोगा उवसमंति ७ न य हुंति वेराइं ८ ॥४४३॥
दुब्भिक्ख ९ डमर १० दुम्मारि ११ ईई १२ अइवुट्ठि १३ अणभि[4]वुट्ठीओ ।
हुंति न १४ जियबहुतरणी पसरइ भामंडलुज्जोओ १५ ॥४४४॥

१ मधुरिमा० खं. ॥ २ जम्हाउ- जे. ॥ ३ जोयणमित्ते- ता. ॥ ४ ०वुट्ठी य- ता. ॥

सुररइयाणिगुवीसा मणिमयसीहासणं सपयवीढं १६ ।
छत्तत्तय १७ इंदद्धय १८ सियचामर १९ धम्मचक्काइं २० ॥४४५॥
सह जगगुरुणा गयणट्ठियाइं पंचवि इमाइं वियरंति ।
पाउब्भवइ असोओ २१ चिट्ठइ जत्थप्पहू तत्थ ॥४४६॥
चउमुहमुत्तिचउक्कं २२ मणि-कंचण-ताररइयसालतिगं २३ ।
नव [1]कणयपंकयाइं २४ अहोमुहा कंटया हुंति २५ ॥४४७॥
निच्चमवट्ठियमित्ता पहुणो चिट्ठंति केस-रोम-नहा २६ ।
इंदियअत्था पंचवि मणोरमा २७ हुंति छप्पि रिऊ २८ ॥४४८॥
गंधोदयस्स वुट्ठी २९ वुट्ठी कुसुमाण पंचवन्नाण ३० ।
[2]दिति पयाहिण सउणा ३१ पहुणो पवणोऽवि अणुकूलो ३२ ॥४४९॥
पणमंति दुमा ३३ वज्जंति दुंदुहीओ गहीरघोसाओ ३४ ।
चउतीसाइसयाणं सव्वजिणिंदाण हुंति इमा ॥४५०॥

40 द्वारे अतिशयाः चतुस्त्रिंशत् गाथा ४४१-४५० प्र. आ. १०८

[3]'रये'त्यादिगाथादशकम्, रजो-मलः, रोगो-व्याधिः, स्वेदः-श्रमजं शरीरजलम्, तैर्विरहितः-त्यक्तः, उपलक्षणत्वाल्लोकोत्तर[4]रूप-गंध-रसबंधुरश्च तीर्थकृतां देहः-शरीरम् १, तथा गोक्षीरधारावद्धवलं-

१ ०कणयकमलाइ-जे. ॥ २ दिंति य पयाहिणाउ सउणा पवणो-जे. ॥ ३ रय-रोग-सेयरहिउ इत्यादि-सं. ॥
४ रूपगंधबंधु० स ॥

पाण्डुरम् अविश्रं च मांस-रुधिरम् २, तथा आहारः–अभ्यवहरणम् , नीहारो–मूत्र-पुरीषोत्सर्गस्तौ क्रियमाणौ न दृश्येते इत्यदृश्यौ मांसचक्षुषा, न पुनरवध्यादिलोचनेन पुंसा ३, तथा विकचोत्पलवत्सुरभयः श्वासा–उच्छ्वास-निःश्वासाः ४, इत्येते चत्वारोऽप्यतिशया जिनानां जन्मतोऽपि जाताः ।

इदानीमेकादशातिशयाः **'कर्मक्षयभवाः'** कर्मणां–ज्ञानाऽऽवरणादीनां चतुर्णां घातिकर्मणां क्षयाज्जाताः कथ्यन्त इति शेषः, तत्र **'योजनमात्रे'** योजनप्रमाणेऽपि **'क्षेत्रे'** समवसरणभुवि **'त्रिजगज्जनः'** सुर-नर तिर्यग्जनः **'प्रभूतोऽपि'** कोटीकोटीप्रमाणोऽपि **'माति'** परस्परासम्बाधया सुखेनावतिष्ठते ५, तथा वाणी अर्धमागधीभाषा भगवताऽभिधीयमाना नर-तिर्यक्-सुराणां प्रत्येकं **'निजनिजभाषया'** स्वस्वभाषया कृत्वा धर्मावबोधका धर्मावबोधदा वा भवति । अयमर्थः–योजनव्यापिनी एकस्वरूपाऽपि भगवतो भारती वारिदविमुक्तवारिवत्तत्तदाश्रयानुरूपतया परिणमति, यत उक्तम्—

"देवा दैवीं नरा नारीं शबराश्चपि शाबरीम् । तिर्यञ्चोऽपि हि तैरश्चीं मेनिरे भगवद्गिरम् ॥ १ ॥"

न ह्येवंविधभुवनाद्भुतमतिशयमन्तरेण युगपदनेकसत्त्वोपकारः शक्यते कर्तुमिति ६, तथा पूर्वोत्पन्ना रोगाः ज्वरा-ऽरोचकादय उपशाम्यन्ति, अपूर्वाश्च नोत्पद्यन्ते ७, तथा न च–नैव भवन्ति पूर्वभवनिबद्धानि जातिप्रत्ययानि च वैराणि–परस्परविरोधाः ८, तथा दुर्भिक्षं–दुष्कालः ९, तथा डमरः–स्वचक्र-परचक्रकृतो विप्लवः १०, तथा दुष्टदेवतादिकृतं सर्वगतं मरणं दुर्मारिः ११, तथा ईतयः–प्रचुरशलभ-शुक-मूषकाद्या धान्यादिविनाशिकाः १२, तथाऽतिवृष्टिः–अतिजलपातः १३, तथाऽनावृष्टिः–सर्वथा जलपाताऽभावः १४, एते च

रोगादयो यत्र यत्र भगवान् विहरति तत्र तत्र चतसृषु दिक्षु प्रत्येकं पञ्चविंशतियोजनमध्ये न जायन्ते, तदुक्तं **समवायाङ्गे** ।

* ''जओ जओऽवि य णं [1]अरिहंता भगवंतो विहरंति तओ तओऽविय णं जोअणपणवीसाए णं [2]ईई न भवइ मारी न भवइ परचक्कं न [3]भवइ सचक्कं न भवइ अइवुट्ठी न भवइ, अणावुट्ठी न भवइ दुब्भिक्खं न भवइ, पुव्वुप्पण्णा[4]वि य णं उप्पाइया वाही खिप्पामेव उवसमंति'' [सू. ३४] त्ति ।

**स्थानाङ्गटीका**यामपि दशस्थानके लिखितम्—

''महावीरस्य भगवतः स्वप्रभावप्रशमितयोजनशतमध्यगतवैरिमारिविड्वरदुर्भिक्षाद्युपद्रवस्यापि'' इति ।

तथा जिनशिरसः पश्चाद्भागेऽतिभास्वरतया जितबहुतरणिः—तिरस्कृतद्वादशार्कतेजाः प्रसरति भामण्डलस्य—प्रभापटलस्योद्योतः १५ ।

अथ सुररचितानां—देवकृतानामतिशयानामेकोनविंशतिः कथ्यते, तत्र आकाशवदत्यन्तं स्वच्छो योऽसौ स्फटिकमणिस्तन्मयं सिंहासनं सपादपीठं—पादपीठयुक्तम् १६, तथा छत्रत्रयमतिपवित्रम् १७, तथा

* यत्र यत्रापि च अर्हन्तो भगवन्तो विहरन्ति तत्र तत्रापि पञ्चविंशतौ योजनेषु ईतयो न भवन्ति, मार्यो न भवन्ति परचक्र न भवति, स्वचक्र न भवति, अतिवृष्टिर्न भवति, अनावृष्टिर्न भवति, दुर्भिक्षं न भवति, पूर्वोत्पन्ना अपि च व्याधयः क्षिप्रमेवोपशाम्यन्ति ।

१ अरहंतो-इति समवायाङ्गसूत्रे पाठः ॥ २ ईती न- समवा. । ईई ण मु. ॥
३ हवइ-मु । भवइ सचक्कं न भवइ परचक्कं न भवइ अइ० इति समवायाङ्गसूत्रे पाठः ॥ ४ ०न्नां० सं ॥

जिनस्य पुरतोऽनेकलघुपताकिकासहस्रसुन्दरः समुत्तुङ्गो निस्सपत्नरत्नमयः शेषध्वजापेक्षयाऽतिमहत्त्वादिन्द्रश्चासौ ध्वजश्च इन्द्रत्वसूचको वा ध्वज इन्द्रध्वजः१८, तथोभयोः पार्श्वयोर्यक्षहस्तगते सिते चामरे १९, तथा पुरतः पद्मप्रतिष्ठितं स्फुरत्किरणचक्रं धर्मप्रकाशकं चक्रं धर्मचक्रम् २०, एतानि च सिंहासनादीनि पञ्चपि यत्र यत्र जगद्गुरुर्विचरति तत्र तत्र गगनगतानि गच्छन्ति, तथा यत्र यत्र प्रभुस्तिष्ठति तत्र तत्र विचित्रपत्रपुष्पपल्लवस्पृहणीयच्छत्र-ध्वज-घण्टा-पताकादिपरिवृतः प्रादुर्भवत्यशोकवृक्षः २१, तथा चतुर्मुखं चतुर्दिशं मूर्तिचतुष्कम् , तत्र पूर्वाभिमुखं भगवान् स्वयमुपविशति शेषासु च तिसृषु दिक्षु प्रतिरूपकाणि तीर्थकराऽऽकृतिमन्ति तीर्थकरप्रभावादेव च तीर्थकररूपाऽनुरूपाणि सिंहासनादियुक्तानि देवकृतानि भवन्ति शेषदेवादीनामपि अस्माकं स्वयं कथयतीति प्रतिपत्त्यर्थम् २२, तथा समवसरणे मणि-काञ्चन--ताररचितं शालत्रिकम् ,तत्र तीर्थङ्करप्रत्यासन्नप्रथमप्राकारो नानाप्रकारनिःसपत्नरत्नमयो वैमानिकसुरैर्विरच्यते, द्वितीयो मध्यवर्ती कमनीयकनकमयो ज्योतिष्कविबुधैर्विधीयते, तृतीयस्तु बहिर्भूतस्तारतरकान्तिराजितरजतमयो भवनपतिदेवैर्वितन्यते २३, तथा '**नवकनकपङ्कजानि**' नवसङ्ख्यानि काञ्चनकमलानि नवनीतस्पर्शानि क्रियन्ते, तत्र च द्वयोर्भगवान् स्वकीयक्रमकमलयुगलं [२]विन्यस्य विचरति अन्यानि च सप्त पद्मानि पृष्ठतस्तिष्ठन्ति तेषां च यद्यत्पश्चिमं तत्तत्पादन्यासं कुर्वतो भगवतः पुरतो भवति २४, तथा यत्र यत्र भगवान् विहरति तत्र तत्राधोमुखाः कण्टकाः संपद्यन्ते २५, तथा नित्यं—सर्वदा अवस्थितमात्रा—अवृद्धिस्वभावाः प्रभोः—भगवतस्तिष्ठन्ति—आसते केश-रोम-नखाः, केशाः—शिरः-कूर्चसम्भवाः, रोमाणि—शेषशरीरसम्भवानि,

१ भुवन०-स. ॥ २ विरचय्य विचरति-सं. ॥

नखाः—पाणिपादजाः २६, तथा इन्द्रियार्था—विषयाः पञ्चापि—स्पर्श-रस-रूप-गन्ध-शब्दस्वरूपा अमनोज्ञानामभावेन मनोज्ञानां च प्रादुर्भावेन मनोरमा—मनःप्रीणका भवन्ति २७, तथा षडपि ऋतवो—वसन्ताद्याः शरीराप्यायकसुखस्पर्शादिसम्पादकत्वेन सर्वदाविकाशिकुसुमादिसमृद्ध्या च मनोरमा अनुकूलाः सम्पद्यन्ते २८, तथा यत्र भगवांस्तिष्ठति तत्र पांशुप्रसरप्रशमनार्थं गन्धोदकवृष्टिर्घनघनसारादिमिश्रमनोहारिवृष्टिः २९, तथा वृष्टिः कुसुमानां—मन्दार-पारिजातक-चम्पकादीनां पञ्चवर्णानां—श्वेत-रक्त-पीत-नील कालानाम् ३०, तथा शकुनाः-पक्षिणो ददति प्रदक्षिणाम् , यत्र भगवान् सञ्चरति तत्र चाष-शिखण्डिप्रभृतयः पक्षिणः प्रदक्षिणगतयो भवन्तीत्यर्थः ३१, तथा पवनः-संवर्तकवातो योजनं [1]यावत्क्षेत्रशुद्धिविधायकत्वेन सुरभि-शीतल-मन्दत्वेन च अनुकूलः—सुखदो भवति, यदुक्तं **समवायाङ्गे**—△"सीयलेणं सुहफासेणं [2]सुरभिणा मारुएणं जोयणपरिमंडलं सव्वओ समंता संपमज्जिज्जइ" [सू. ३४] त्ति, ३२, तथा यत्र भगवान् [3]व्रजति तत्र द्रुमाः—पादपाः प्रणमन्ति-नम्रा भवन्ति ३३, तथा यत्र भगवान् सलीलं सञ्चरति तत्र वाद्यन्ते दुन्दुभयो—महत्यो ढक्काः सजलजलधरवद्गम्भीरभुवनव्यापिघोषाः ३४ । इति [4]सर्वजिनेन्द्रातिशयानां चतुस्त्रिंशत् चतुर्णामेकादशानामेकोनविंशतेश्च [5]मीलने भवन्तीति । इह च **यत्समवायाङ्गेन** सह किञ्चिदन्यथात्वमपि

१ यावते क्षेत्र०-सं. ॥ △ शीतलेन सुरभिना सुखस्पर्शेन मारुतेन योजनपरिमण्डलं सर्वतः समन्तात् संप्रमार्ज्यते ॥ २ सुरहिणा-मु. ॥ ३ प्रव्रजति-सं. ॥ ४ "चत्वारोऽतिशयाश्चान्ये, तेषां विश्वोपकारिणाम् पूजा-ज्ञान-वचो-ऽपायाऽपगमाख्या महाद्भुताः ॥ अष्टकं प्रतिहार्याणां चत्वारोऽतिशया इमे । इत्येवं द्वादशगुणा अर्हतां परिकीर्तिताः" ॥ इति लो. प्र. (३० । ९९७-९९८) ॥ ५ मीलनेन म० मु० ॥

दृश्यते तन्मतान्तरमवगन्तव्यम् , मतान्तरबीजानि तु सर्वज्ञविज्ञेयानीति ॥४४१–४५०॥४०॥

सम्प्रति **'दोसा अट्ठारस'**त्ति एकचत्वारिंशत्तमं द्वारमाह—

**[1]अन्नाण १ कोह २ मय ३ माण ४ लोह ५ माया ६ रई ७ य अरई ८ य ।**
**निद्दा ९ सोय १० अलियवयण ११ चोरिया १२ मच्छर १३ भया १४ य ॥४५१॥**
**पाणिवह १५ [2]पेम्म १६ [3]कीलापसंग १७ हासा १८ य जस्स इय दोसा ।**
**[4]अट्ठारसवि पणट्ठा नमामि देवाहिदेवं तं ॥४५२॥**

**'अन्नाण कोह'** इत्यादिगाथाद्वयम् , **'अज्ञान'** संशया-ऽनध्यवसाय-विपर्ययात्मकं मौढ्यम् १, **'क्रोधः'** कोपः २, **'मदः'** कुल-बलैश्वर्य-रूप-विद्यादिभिरहङ्कारकरणं [5]परप्रधर्षणानिबन्धनं वा ३, **'मानो'** दुरभिनिवेशाऽमोचनं युक्तोक्ताग्रहणं वा ४, **'लोभो'** गृद्धिः ५, **'माया'** दंभः ६, **'रतिः'** अभीष्टपदार्थानामुपरि मनःप्रीति ७, **'अरतिः'** अनिष्टसम्प्रयोगसंभवं मनोदुःखम् ८, **'निद्रा'** स्वापः ९, **'शोकः'** चित्त-

---

१ तुलना-"अन्तराया दान-लाभ-वीर्य-भोगोपभोगगाः । हासो रत्यरती भीतिर्जुगुप्सा शोक एव च ॥
कामो मिथ्यात्वमज्ञानं निद्रा चाऽविरतिस्तथा । रागो द्वेषश्च नो दोषास्तेषामष्टादशाप्यमी ॥
हिंसाऽलीकमदत्तं च क्रीडा हास्याऽरती रतिः । शोको भय क्रोध-मान-माया-लोभास्तथा मदः ॥
स्युः प्रेम-मत्सरा-ऽज्ञान-निद्रा अष्टादशेत्यमी । द्विधापि सप्ततिशतस्थानके प्रतिपादिताः ॥" इति
लो. प्र. (३०।१००२-१००५), द्रष्टव्यं–सप्ततिशतप्र. १६१-१६२ । अभि.चिन्तामणि ॥१।७२-७३ ॥
२ पेम-मु । द्रष्टव्यम्–'तैलादौ' सि. हे ८।२।९८........पेम्म.......॥ ३ कीडा–ता. ॥ ४ अट्ठारसवि- मु. ॥
५ पर प्रधर्षणनि० सं० ॥

वैधुर्यम् १०, 'अलीकवचनं' वितथभाषणम् ११ [1]'चोरिका' परद्रव्यापहारः १२, 'मत्सरः' परसम्पद-सहिष्णुता १३, 'भयं' प्रतिभयः १४, 'प्राणिवधः' प्राण्युपमर्दः १५, 'प्रेम' स्नेहविशेषः १६, 'क्रीडाप्रसङ्गः' क्रीडायामासक्तिः १७, 'हासो' हास्यम् १८, इति यस्य दोषा अष्टादशापि प्रणष्टा नमामि देवाधिदेवं तमिति ॥४५१-४५२॥४१॥

इदानीं 'अरिहचउक्कं'ति द्विचत्वारिंशत्तमं द्वारमाह—

**जिणनामा नामजिणा केवलिणो सिवगया य भावजिणा ।**
**ठवणजिणा पडिमाउ दव्वजिणा भाविजिणजीवा ॥४५३॥**

**'जिननामा'** इत्यादि, जिनाश्चतुर्धा नामजिनाः, स्थापनाजिनाः, द्रव्यजिनाः, भावजिनाश्चेति, तत्र जिनानां—तीर्थकृतां नामानि ऋषभा-ऽजित-सम्भवादीनि नामजिनाः, तथा अष्टमहाप्रातिहार्यादिसमृद्धिं साक्षादनुभवन्तः **'केवलिनः'** समुत्पन्नकेवलज्ञानाः **'शिवगताश्च'** परमपदप्राप्ता भावतः—सद्भावतो जिना भावजिनाः, गाथानुलोम्याच्च अनानुपूर्व्या भावजिना व्याख्याताः, **'स्थापनाजिनाः'** प्रतिमाः काञ्चन-मुक्ता-शैल-मरकतादिभिर्निर्मिताः, द्रव्यजिना ये जिनत्वेन भाविनो—भविष्यन्ति जीवाः श्रेणिकादय इति ॥४५३॥४२॥

इदानीं [2]'निक्खमणतवो'त्ति त्रिचत्वारिंशत्तमं द्वारं विवृणोति—



१ चौरिका-सं. ॥ २ निक्खवण०-मु. ॥

[1]सुमइत्थ निच्चभत्तेण निग्गओ [2]वासुपुज्ज जिणो चउत्थेण ।
पासो मल्लीवि य अट्ठमेण सेसा उ छुट्ठेणं ॥४५४॥ [आव. नि. २२८]

'सुमइ'त्यादि सुमतिरत्र–अस्यामवसर्पिण्यां चतुर्विंशतौ तीर्थकृत्सु मध्ये 'नित्यभक्तेन' अनवरतभक्तेन निर्गतो–गृहवासात् प्रव्रजित इत्यर्थः, वासुपूज्यो द्वादशस्तीर्थकृच्चतुर्थेन–एकेनोपवासेन प्रव्रजितः, पार्श्वः-त्रयोविंशतितमतीर्थकृत् मल्लिरपि च एकोनविंशतितमतीर्थकृदष्टमेन–त्रिभिरुपवासैः प्रव्रजितः शेषास्तु–ऋषभस्वामिप्रभृतयो विंशतिर्जिनाः षष्ठेन-द्वाभ्यामुपवासाभ्यां निष्क्रान्ता इति ॥४५४॥४३॥



इदानीं 'नाणतवो'त्ति चतुश्चत्वारिंशत्तमं द्वारमाह—

अट्ठमभत्तवसाणे [3]पासोसह-मल्लि-रिट्ठनेमीणं ।
वसुपुज्जस्स चउत्थेण छट्ठभत्तेण सेसाणं ॥४५५॥ [तु. आव. नि. २५५]

'अट्ठम'इत्यादि, अष्टमभक्तान्ते उपवासत्रयपर्यन्ते श्रीपार्श्वजिन-वृषभस्वामि मल्लिनाथा-ऽरिष्टनेमीनां केवलज्ञानमुत्पेदे, वासुपूज्यस्य चतुर्थेन–एकेनोपवासेनेत्यर्थः, शेषाणां तु अजितस्वामिप्रभृतीनां एकोनविंशतेस्तीर्थकृतां षष्ठभक्तेन–द्वाभ्यामुपवासाभ्यामिति ॥४५५॥४४॥



---

१ "सुमई थ"-इति आव.नि. । 'थेति निपातः' इति तत्रैव हारिभद्री व्याख्या ॥
तुलना-"सुमतिर्नित्यभक्तेन मल्ली पार्श्वौ कृताऽष्टमौ । चतुर्थेन द्वादशान्ये कृतषष्ठाः प्रवव्रजुः ॥" इति । लो.प्र.(३२।१००६)॥
२ वासुपुज्ज [जिणो]-मु. । वासुपुज्जो-ता. ॥ ३ पासोसम० ता. ॥

सम्प्रति 'निव्वाणतवो'त्ति पञ्चचत्वारिंशं द्वारं विवृणोति—

निव्वाणं संपत्तो चउदसभत्तेण पढमजिणचन्दो ।
सेसा [1]उण मासएण वीरजिणिंदो य छट्ठेणं ॥४५६॥ [तु.-आव. नि. ३०६]

'निव्वाण' गाथा, निर्वाणं—परमानन्दं सम्प्राप्तश्चतुर्दशभक्तेन—उपवासषट्केन प्रथमजिनचन्द्रः श्रीनाभेयजिनेन्द्रः, शेषाः पुनरजिताद्याः पार्श्वनाथपर्यन्ता द्वाविंशतिर्जिना मासेन—त्रिंशतोपवासैः, वीरजिनेन्द्रश्च षष्ठेन—उपवासद्वयेनेति ॥४५६॥४५॥



इदानीं 'भाविजिणेसरजीव'त्ति षट्चत्वारिंशं द्वारं विवरीषुः प्रथमं तत्प्रस्तावनागाथामाह —

वीरवरस्स भगवओ वोलिय चुलसोइवरिससहसेहिं ।
पउमाईचउवीस जह हुंति जिणा तहा थुणिमो ॥४५७॥
पढमं च [2]पउमनाहं सेणियजीव जिणेसरं [3]नमिमो ।
बीयं च सूरदेवं वंदे जीवं सुपासस्स ॥४५८॥
तइयं सुपासनामं उदायिजीवं पणट्ठभववासं ।
वंदे सयंपभजिणं पुट्टिल्लजीवं चउत्थमहं ॥४५९॥
सव्वाणुभूइनामं दढाउजीवं[4] च पंचमं वंदे ।
छट्ठं देवसुयजिणं वंदे जीवं च कित्तिस्स ॥४६०॥

१ उ मासएण-मु. । उण मासिएणं-ता. ॥ २ पउमनाभ-ता. ॥ ३ वंदे-जे ॥ ४ ०जीयं-ता ॥

सत्तमयं उदयजिणं वंदे जीवं च संखनामस्स ।
पेढालं अट्ठमयं आणंदजियं नमंसामि ॥४६१॥
पोट्टिलजिणं च नवमं सुरकयसेवं सुनंदजीवस्स ।
सयकित्तिजिणं दसमं वंदे सयगस्स जीवंति ॥४६२॥
एगारसमं [1]मुणिसुव्वयं च वंदामि [2]देवईजीयं ।
बारसमं अममजिणं सच्चइजीवं जयपईवं ॥४६३॥
निकसायं तेरसमं वंदे जीवं च वासुदेवस्स ।
बलदेवजियं वंदे चउदसमं [3]निप्पुलायजिणं ॥४६४॥
सुलसाजीवं वंदे [4]पनरसम [5]निम्ममत्तजिणनामं ।
रोहिणिजीवं नमिमो सोलसमं चित्तगुत्तंति ॥४६५॥
सत्तरसमं च वदे रेवइजीवं समाहिनामाणं ।
सवरमट्ठारसमं सयालिजीवं पणिवयामि ॥४६६॥
दीवायणस्स जीव जसोहर वंदिमो इगुणवीसं ।
कण्हजिय गयतण्हं वीसइमं विजयमभिवदे ॥४६७॥

१ मुणिसोव्वयं-ता. ॥ २ देवईए जीयं-ता० ॥ ३ निप्पुलाइजिणं-जे. ॥ ४ पन्नरसमं मु. ॥ ५ निम्ममत्तं० ता. ॥

४६ द्वारे
भावि-
जिनजीवाः
गाथा
४५७-
४७०
प्र.आ.
१११

वंदे इगवीसइमं नारयजीवं च [1]मल्लिनामाणं ।
देवजिणं बावीसं अंबडजीवस्स वंदेऽहं ॥४६८॥
अमरजियं तेवीस अणंतविरियाभिह जिणं वंदे ।
तह [2]साइबुद्धजीव चउवीसं भद्दजिणनाम ॥४६९॥
[3]उस्सप्पिणिए चउवीस जिणवरा कित्तिया सनामेहिं ।
सिरिचंदसूरिनामेहि सुहयरा हुंतु सयकालं ॥४७०॥



'वीरवरस्से' त्यादिगाथाचतुर्दशकम् , अत्र षष्ठी पञ्चम्यर्थे, तृतीया च सप्तम्यर्थे, ततो 'वीरवरात्' श्रीमहावीरस्वामिनो 'भगवतः' समग्रैश्वर्यादिगुणयुक्तात् 'व्युत्क्रान्तेषु' गतेषु चतुरशीतिवर्षसहस्रेषु 'पद्मादयः' पद्मनाभप्रभृतयश्चतुर्विंशतिर्जिना यथा भविष्यन्ति तथा 'स्तुमो' नामग्रहणपूर्वकं प्रणमामः, [4]इयमत्र भावना-एतस्यामवसर्पिण्यां चतुर्थारकस्य दुष्षमसुषमालक्षणस्य पर्यन्ते एकोननवतिपक्षे-

---

१ मल्ल०मु. । अत्रैव २९५ तमगाथायामपि 'मल्लि' इति पाठः ॥ २ साइपुत्त० ता. ॥ ३ उस्सप्पिणिइ-मु. ॥

४ तुलना-"४६ द्वारे वीरस्सेति अवसर्पिण्या दुषमसुषमारूपचतुर्थारकस्यान्ते एकोननवतिपक्षेष्ववतिष्ठ(ष्ठ)मानेषु श्रीवीरो निर्वृतः । उत्सर्पिण्या अपि दुःषमसुषमारूपे तृतीयारस्यैकोननवतिपक्षेषु गतेषु श्रीपद्मनाभ उत्पन्न इति । अरकेऽरके एकोननवतिपक्षाणामाकर्पकपूरणेन चतुर्भि मध्यमारकैश्चतुरशीतिवर्षसहस्रा जायन्ते । परेत्वाहुः-"चुल(सी)इ च सहस्सा व(रि)सा सत्तेव पंचमासाओ वीस-महापउमाणं अंतरमेयं वियाणाहि" अन्ये तूत्सर्पिण्या द्वितीयदुःषमारकस्य एकोननवतिपक्षेष्ववशिष्यमाणेषूत्पन्न इत्याहु. तत्र तु संख्या पूर्यत एव ।" इति विषमपदटीकायाम् पत्र ४० A ॥

ष्ववतिष्ठमानेषु श्रीवर्धमानस्वामी निर्वृतः, ततो महावीरनिर्वाणानन्तरम् एकोननवतिपक्षाधिके प्रत्येकमेकविंशतिवर्षसहस्रप्रमिते अवसर्पिणीसम्बन्धिपर्यन्तारकद्वये गते तथोत्सर्पिण्या अप्यतिदुष्षमादुष्षमारूपे प्रत्येकमेकविंशतिवर्षसहस्रमाने एवाद्यारकद्वये गते तृतीयारकस्य च दुष्षमसुषमारूपस्यैकोननवतिपक्षेषु गतेषु श्रीपद्मनाभः समुत्पन्नः, ततः प्रागुक्तारकचतुष्टयसम्बन्धिसर्वप्रमाणमीलने चतुरशीतिर्वर्षसहस्रा जायन्ते, ये च पक्षाणां द्वे एकोननवती समधिके अवतिष्ठेते ते अल्पत्वान्न विवक्षिते इति ।

अथ तानेव क्रमेणाह–प्रथमं पद्मनाभं जिनेश्वरं श्रीमन्महावीरपरमश्रावक**श्रेणिक**महाराजजीवं नमामः, द्वितीयं च सूरदेवं वन्दे जीवं **सुपार्श्वस्य** श्रीमहावीरपितृव्यस्य, तृतीयं सुपार्श्वनामानं कोणिकपुत्र**उदायि**महाराजजीवं प्रणष्टभववासमहं वन्दे, स्वयंप्रभजिनं [1]**पोट्टिल**जीवं चतुर्थमहम्, सर्वानुभूतिनामानं **दृढायुषो** जीवं पञ्चमं वन्दे, तथा षष्ठं देवश्रुतजिनं वन्दे जीवं **कीर्तेः**, सप्तमम् उदयजिनं वन्दे जीवं च शङ्खनाम्नः श्रावकस्य, पेढालमष्टमकम् **आनन्द**जीवं नमस्यामि, पोट्टिलजिनं च नवमं सुरकृतसेवं **सुनन्द**जीवस्य सम्बन्धिनम्, शतकीर्तिजिनं दशमं वन्दे **शतकस्य** जीवम्, एकादशमं मुनिसुव्रतं वन्दे **देवक्या** जीवम्, द्वादशमममजिनं **सत्यकि**जीवं जगत्प्रदीपम्, निष्कषायं त्रयोदशं वन्दे जीवं च **वासुदेवस्य**, **बलदेवस्य** जीवं चतुर्दशं निष्पुलाकजिनम्, **सुलसाया** जीवं वन्दे पञ्चदशं निर्ममत्वनामानं जिनम्, **रोहिणी**जीवं नमामः षोडशं चित्रगुप्तमिति, सप्तदशं च वन्दे **रेवत्या** जीवं समाधिनामानं जिनम्, संवरमष्टादशं **सतालि**जीवं प्रणिपतामि–नमामि, **द्वीपायनस्य** जीवं यशोधरनामानं जिनमेकोनविंशं वन्दे,

१ पोट्टिलकजीवं-मु. ॥

कृष्णजीवं गततृष्णं विंशतितमं विजयनामानमभिवन्दे, तथा वन्दे एकविंशतितमं नारदजीवं च [1]मल्लि-नामानम् , देवजिनं द्वाविंशं अम्बडजीवस्य संबन्धिनम् , अमरजीवं त्रयोविंशतितममनन्तवीर्याभिधं जिनं वन्दे, तथा स्वातिबुद्धजीवं चतुर्विंशतितमं भद्रजिननामानं वन्दे। उत्सर्पिण्यां—भाविन्यां चतुर्विंशतिर्जिनवराः 'कीर्तिता' पूर्वभवसम्बन्धिनामप्रति[2]पादनपूर्वकैः स्वनामभिः श्रीचन्द्रसूरिनाम्नाऽऽचार्येण स्तुताः सुखकराः शुभकरा वा भवन्तु सदाकालमिति। एते च तथाविधसम्प्रदायाभावात् शास्त्रान्तरैः सह विसंवादित्वाच्च न विशेषतो विवृताः ॥४५७-४७०॥४६॥

सम्प्रति 'संखा उड्ढाह-तिरियसिद्धाणं' इति सप्तचत्वारिंशं द्वारमाह—

[3]चत्तारि उड्ढलोए दुवे समुद्दे तओ जले चेव ।
बावीसमहोलोए तिरिए अट्ठुत्तरसयं तु ॥४७१॥

१ मल्लना० सं.॥ २ पादनकपू०-मु.॥
३ तुलना—"एकस्मिन्समये चोर्ध्वलोके चत्वार एव ते। सिद्ध्यन्त्युत्कर्षतो दृष्टमधोलोके मतत्रयम् ॥६५॥ विंशतिर्द्वाविंशतिश्च, चत्वारिंशदिति स्फुटम्। उत्तराध्ययने सम्रहण्यां च सिद्धप्राभृते ॥६६॥ 'वीसमहे तहेवेति' उत्तराध्ययने जीवाजीव विभक्त्यध्ययने [३६।५४]। 'उड्ढहोतिरिय लोए चउबावीसट्ठसयं' इति सङ्ग्रहण्याम [गाथा २७३]। वीसपुहुत्तं अहोलोए' इति सिद्धप्राभृते, तट्टीकायां 'विंशतिपृथक्त्वं द्वे विंशती' इति" इति लोकप्रकाशे द्वितीयसर्गे। 'पुहत्तसद्दो बहुत्तवाई कम्मपगडिसंगहणीए भणिओत्ति गाथार्थः।' इति सिद्धप्राभृतटीकायाम्। विशेषार्थं द्रष्टव्यानि विजयोदयसूरिप्रणीतानि टिप्पनकानि (लो.प्र. पृ.१०६तः) इयं गाथा बृहत्संग्रहणी मलय० वृत्तौ (पृ० १३३ A) प्रक्षेपरूपेण निर्दिष्टा ॥

'चत्तारि' त्यादिगाथा, ❀ ऊर्ध्वलोके एकसमयेनोत्कर्षतश्चत्वार एव सिद्ध्यन्ति, तथा द्वौ समुद्रे, त्रयः शेषजले हृद-नद्यादिसम्बन्धिनि, **सिद्धप्राभृता**भिप्रायेण तु जलमध्ये चत्वारो द्रष्टव्याः, तथा अधोलोके-अधोग्रामादौ उत्कर्षत एकसमयेन द्वाविंशतिः सिद्ध्यति, **सिद्धप्राभृते** [1]पुनरित्थं दृश्यते यथा—

"चत्तारि उड्ढलोए जले चउक्कं दुवे समुद्दंमि । अट्ठसयं तिरिलोए वीसपुहुत्तं अहोलोए" ॥१॥

एतट्टीकायां च विंशतिपृथक्त्वं [2]द्विविंशतिप्रमाणं गृहीतम्, द्विप्रभृत्या नवभ्य इति पृथक्त्ववचनात्, ततो यद्यत्रापि 'दोवीसमहोलोए' इति पठ्यते ततः समीचीनं भवति, तथा तिर्यग्लोके उत्कर्षत एकसमयेनाष्टोत्तरं शतं सिद्ध्यतीति ॥४७१॥ ४७ ॥

सम्प्रति 'तह [3]एक्कसमयसिद्धाण' त्ति अष्टचत्वारिंशं द्वारमाह—

[4]एक्को व दो व तिन्नि व अट्ठसयं जाव एक्क [5]समयम्मि ।
मणुयगईए सिज्झइ सखाउयवीयरागा उ ॥४७२॥

[6]'एक्को व गाहा', एकस्मिन् समये जघन्यत एको [7]द्वौ त्रयो वा सिद्ध्यन्ति उत्कर्षतोऽष्टोत्तरं शतम्, ते च सिद्ध्यन्ति मनुष्यगतेः सकाशान्न शेषगतिभ्यः, तेऽपि च सङ्ख्येयवर्षायुषः, असङ्ख्येयवर्षायुषां सिद्ध्यभावात्, तत्रापि वीतरागाः—अपगतरागाः उपलक्षणत्वाच्च अपगतसकलकर्मकलङ्काः, न पुनः कुतीर्थिकसम्मता इव सकर्माणोऽपि इति ॥४७२॥४८॥

❀ तुलना-बृहत्सङ्ग्रहणी मलय० वृत्तिः पृ० १३३ B॥ १ पुनरिदं-मु.॥ २ द्वा (द्वि) विशति०-मु.॥ ३ इक्क० मु.॥ ४ इक्को-मु ॥ ५ ०समएणं-जे. समयेणं-ता. ६ एक्को व गाहा-मु. नास्ति॥ ७ द्वौ वा त्रयो-मु.॥

'ते य पन्नरसभेएहिं' ति द्वारमिदानीमेकोनपञ्चाशं विवरीतुमाह–

**तित्थयर १ अतित्थयरा २ तित्थ ३ सलिंग ४ ऽन्नलिंग ५ थी ६ पुरिसा ७ ।**
**गिहिलिंग ८ [1]नपुंसक ९ अतित्थसिद्ध १० पत्तेयबुद्धा ११ य ॥४७३॥**
**एग १२ अणेग १३ सयंबुद्ध १४ बुद्धबोहिय १५ पभेयओ भणिया ।**
**सिद्धंते सिद्धाणं भेया पन्नरससंखत्ति ॥४७४॥**

'तित्थयरे'त्यादिगाथाद्वयम्, तीर्थकराः सन्तो ये सिद्धास्ते तीर्थकरसिद्धाः १, तथा अतीर्थकराः-सामन्यकेवलिनः सन्तो ये सिद्धास्तेऽतीर्थकरसिद्धाः २, तथा तीर्यते 'संसारसागरोऽनेनेति तीर्थं-यथावस्थितजीवा-ऽजीवादिपदार्थसार्थप्ररूपकं परमगुरुप्रणीतं प्रवचनं तच्च निराधारं न भवतीति सङ्घः प्रथमगणधरो वा वेदितव्यः, तस्मिन्नुत्पन्ने ये सिद्धास्ते तीर्थसिद्धाः ३, [2]तथा स्वलिङ्गे–रजोहरणादिरूपे व्यवस्थिताः सन्तो ये सिद्धास्ते स्वलिङ्गसिद्धाः ४, तथा अन्यलिङ्गे–परिव्राजकादिसम्बन्धिनि वल्कलकषायादिरूपे द्रव्यलिङ्गे व्यवस्थिताः सन्तो ये सिद्धास्ते अन्यलिङ्गसिद्धाः, यदा अन्यलिङ्गिनामपि भावतः सम्यक्त्वादिप्रतिपन्नानां केवलज्ञानमुत्पद्यते तत्समयं च कालं कुर्वन्ति तदेदं द्रष्टव्यम्, अन्यथा यदि दीर्घमायुष्कमात्मनः पश्यन्ति ततः साधुलिङ्गमेव प्रतिपद्यन्ते ५, तथा स्त्रिया लिङ्गं स्त्रीलिङ्गं स्त्रीत्वस्योपलक्षणमित्यर्थः, तच्च त्रिधा–वेदः शरीरनिर्वृत्तिर्नेपथ्यं च, तत्रेह शरीरनिर्वृत्त्या प्रयोजनं न वेद-नेपथ्याभ्याम्, वेदे सति सिद्ध्यभावात्, नेपथ्यस्य चाप्रमाणत्वात्, तस्मिन् स्त्रीलिङ्गे वर्तमानाः सन्तो ये सिद्धास्ते स्त्रीलिङ्गसिद्धाः ६,



---

१ नपुंस अतित्थ०-जे ॥ २ तथा च सलिङ्गे-सं. ॥

तथा पुरुषलिङ्गे शरीरनिर्वृत्तिरूपे व्यवस्थिताः सन्तो ये सिद्धास्ते पुरुषलिङ्गसिद्धाः ७ तथा, गृहस्थाः सन्तो ये सिद्धास्ते गृहिलिङ्गसिद्धा **मरुदेवी**प्रभृतयः ८, तथा नपुंसकलिङ्गे वर्तमानाः सन्तो ये सिद्धास्ते [1]नपुंसकलिङ्गसिद्धाः ९, तथा तीर्थस्याभावोऽतीर्थं तीर्थस्याभावश्चानुत्पादोऽपान्तराले व्यवच्छेदो वा तस्मिन् ये सिद्धास्तेऽतीर्थसिद्धाः, तत्र तीर्थस्यानुत्पादे सिद्धा **मरुदेवी**प्रभृतयः, न हि मरुदेव्याः सिद्धिगमनकाले तीर्थमुत्पन्नमासीत्, तीर्थस्य व्यवच्छेदश्च सुविधिस्वाम्याद्यपान्तरालेषु, तत्र ये जातिस्मरणादिना प्राप्तापवर्गास्ते तीर्थव्यवच्छेदसिद्धाः १०, तथा प्रतीत्य एकं किञ्चिद् वृषभादिकमनित्यतादिभावनाकारणं वस्तु बुद्धा–बुद्धवन्तः परमार्थमिति प्रत्येकबुद्धास्ते सन्तो ये सिद्धास्ते प्रत्येकबुद्धसिद्धाः ११, तथा [2]एकस्मिन् समये एकका एव सन्तो ये सिद्धास्ते एकसिद्धाः १२, तथा एकस्मिन् समये ये अनेके सिद्धास्ते अनेकसिद्धाः १३, तथा स्वयम्–आत्मना बुद्धाः–तत्त्वं ज्ञातवन्तः स्वयंबुद्धास्ते सन्तो ये सिद्धास्ते स्वयंबुद्धसिद्धाः १४, तथा बुद्धा–आचार्यास्तैर्बोधिताः सन्तो ये सिद्धास्ते बुद्धबोधितसिद्धाः १५, इत्येतैः पूर्वोक्तैस्तीर्थकरत्वादिभिः प्रभेदैः-विशेषैर्भणिताः-प्रतिपादिताः सिद्धान्ते सिद्धानां भेदाः–प्रकाराः पञ्चदशसङ्ख्याः।

[3]ननु तीर्थकरसिद्धा-ऽतीर्थकरसिद्धरूपभेदद्वये तीर्थसिद्धा-ऽतीर्थसिद्धरूपभेदद्वये वा शेषभेदाः सर्वेऽप्यन्तर्भवन्ति तत्किमर्थं शेषभेदोपादानम् ?, सत्यमन्तर्भवन्ति परं न विवक्षितभेदद्वयोपादानमात्रात् शेषभेदपरिज्ञानं भवति, विशेषपरिज्ञानार्थं चैष शास्त्रारम्भप्रयास इति शेषभेदोपादानमिति ॥४७३-४७४॥४१॥

१ नपुंसकसिद्धाः-सं ॥ २ एकस्मिन् एकस्मिन् समये-जे.॥ ३ तुलना–नन्दिसूत्र हा॰ टी॰ पृ॰ ३९ ॥

इदानीम् 'अवगाहणाय सिद्धा उक्किट्ठ-जहन्न-मज्झिमाए य' त्ति पञ्चाशत्तमं द्वारमाह—

**दो चेवुक्कोसाए चउर जहन्नाए मज्झिमाए उ ।**
**अट्ठाहियं सयं खलु सिज्झइ ओगाहणाइ तहा ॥४७५॥**

'दो चेवु गाहा', एकस्मिन् समये युगपदुत्कृष्टायामवगाहनायां पञ्चधनुःशतमानायामुत्कर्षतो द्वावेव सिद्ध्यतः, जघन्यायामवगाहनायां हस्तद्वयप्रमाणायां चत्वारः, मध्यमायां [1]तु अजघन्योत्कृष्टरूपायामष्टाधिकं शतं खलु सिद्ध्यति, [2]ननु मरुदेवी नाभिकुलकरपत्नी, नाभेश्च पञ्चविंशत्यधिकानि पञ्च धनुःशतानि तनुमानम्, यदेव च तस्य तनुमानं तदेव मरुदेव्या अपि,

△'संघयणं संठाणं उच्चत्तं चेव कुलगरेहिं समं' [ आव. नि. १६० ] इति वचनात्,

मरुदेवी च भगवती सिद्धा, ततः कथं पञ्चधनुःशतप्रमाणा उत्कृष्टाऽवगाहना घटते ? इति, नैष दोषः, मरुदेवाया नाभेः किञ्चिदूनप्रमाणत्वात्, स्त्रियो ह्युत्तमसंस्थाना उत्तमसंस्थानेभ्यः पुरुषेभ्यः स्वस्व-कालापेक्षया किञ्चिदूनप्रमाणा भवन्ति, ततो मरुदेवाऽपि पञ्चधनुःशतप्रमाणेति न कश्चिद्दोषः, अपि च—हस्तिनः स्कन्धारूढा सङ्कुचिताङ्गी मरुदेवी सिद्धा ततः शरीरसङ्कोचभावान्नाधिकावगाहनासम्भव इत्य-

१ तु जघन्य० मु. ॥ २ तुलना-लो.प्र. (२ । १२८ तः) आव.मलय.टीका पृ. ५४४ B गाथा १७१ ॥
△ सहननं संस्थानं उच्चैस्त्वं चैव कुलकरैः समम् ॥
३ 'अयं च भाष्यकृदभिप्राय.' इति लो. प्र. (२/१३०) । आवश्यकहा.टी. (पृ. ४४४ B) द्रष्टव्या ॥

विरोधः, अथवा यदिद[1]मागमे पञ्चधनुःशतान्युत्कृष्टं तनुमानमुक्तं तद्बाहुल्यापेक्षया, अन्यथा [2]पञ्चविंशत्यधिकपञ्चधनुःशतप्रमाणा उत्कृष्टाऽवगाहना, सा च मरुदेवीकालवर्तिनामेवावसेया, मरुदेव्या आदेशान्तरेण नाभिकुलकरतुल्यत्वात, तदुक्तं सिद्धप्राभृतटीकायाम्–'मरुदेवीवि आएमंतरेण नाभितुल्ल'त्ति [गाथा-३७ टीका] सिद्धप्राभृतसूत्रेऽप्युक्तम्–

△"ओगाहणा जहन्ना रयणीदुगं [3]अह पुणाइ उक्कोसा। पंचेव धणुसयाइं धणुहपुहुत्तेण अहियाइं ॥१॥"

एतट्टीकाव्याख्या च "पृथक्त्वशब्दो बहुत्ववाची बहुत्वं चेह पञ्चविंशतिरूपं द्रष्टव्य"मिति ॥४७५॥५०॥

इदानीं-गिहिलिंग-अन्नलिंग-❀ सलिंग-सिद्धाण संखा उ' त्ति एकपञ्चाशत्तमं द्वारमाह–

**इह चउरो गिहिलिंगे दसऽन्नलिंगे सयं च अट्ठहियं ।**
**विन्नेयं [4]च सलिंगे समएणं सिज्झमाणाणं ॥४७६॥**

'इह चउरो गाहा' 'इह' मनुष्यलोके गृहिलिङ्गे वर्तमाना एकस्मिन् समये उत्कर्षतश्चत्वारः सिद्ध्यन्ति, तथा तापसाद्यन्यलिङ्गे वर्तमाना उत्कर्षत एकसमये दश सिद्ध्यन्ति, तथा शतं चैकमष्टाधिकं विज्ञेयमेकस्मिन्

---

१ द्रष्टव्यम् औपपातिकसूत्रम् (पृ. ११५ B तः)॥ २ 'संग्रहणीवृत्त्यभिप्रायस्त्वयम्' इति लो प्र. (२।१३०)। तुलना–तत्रोत्कृष्टं पञ्चधनुः शतानि पञ्चविंशत्युत्तराणि। जघन्यमर्धचतुर्था रत्नयो देशोनाः। इति सर्वार्थसिद्धिः (१०।६)॥ △ अवगाहना जघन्या रत्निद्विकमथ पुनरुत्कृष्टा-पञ्चैव धनुःशतानि धनुष्पृथक्त्वेनाधिकानि ॥१॥ ३ तह-सिद्धप्राभृते, अह-सिद्धप्रा. पाठान्तरम्॥ ❀ ०स्सलिंग० मु.॥ ४ तु-ता.॥

समये युगपदुत्कर्षतः 'स्वलिङ्गे' यतिलिङ्गे सिद्ध्यतामिति ॥४७६॥५१॥

साम्प्रतं बत्तीसाई सिज्झंत अविरय'मिति द्विपञ्चाशत्तमं द्वारमाह—

**बत्तीसाई सिज्झंति अविरयं जाव अट्ठअहियसयं ।**
**अट्ठसमएहिं एक्केक्कूणं जावेक्कसमयंमि ॥४७७॥**
**बत्तीसा अडयाला सट्ठी बावत्तरी य बोद्धव्वा ।**
**चुलसीई छन्नउई दुरहियमट्ठोत्तरसयं च ॥४७८॥**[1] [बृहत्सङ्ग्रहणी (जिनभद्रगणी-गाथा ३४७)]

[2]'बत्तीसे'त्यादिगाथाद्वयम्, [3]एकादयो द्वात्रिंशत्पर्यंताः सिद्ध्यन्तो निरन्तरमष्टौ समयान् यावत् प्राप्यन्ते, अयमत्र परमार्थः-प्रथमे समये जघन्यत एको द्वौ वा उत्कर्षतो द्वात्रिंशत् सिद्ध्यन्ति, द्वितीयेऽपि समये जघन्यत एको द्वौ वा उत्कर्षतो द्वात्रिंशत्, एवं तृतीयेऽपि चतुर्थेऽपि यावदष्टमेऽपि समये जघन्यत एको द्वौ वा सिद्ध्यतः उत्कर्षतो द्वात्रिंशत् सिद्ध्यन्ति, परतोऽवश्यमन्तरं समयादिकम्, न कोऽपि सिद्ध्यतीत्यर्थः, तथा त्रयस्त्रिंशदादयोऽष्टचत्वारिंशत्पर्यन्ता निरन्तरं सिद्ध्यन्त उत्कर्षतः सप्त समयान् यावत्प्राप्यन्ते, परतो नियमादन्तरं समयादिकम्, तथा एकोनपञ्चाशदादयः षष्टिपर्यन्ता निरन्तरं

१ इतोऽग्रे ता. प्रतौ "अट्ठय सत्तय छ पंच चेव चत्तारि तिन्नि दो एक्कं। बत्तीसाइसु समया निरंतरं अंतरं उवरि ॥" इत्यधिका गाथा विद्यते। द्रष्टव्यं लोकप्रकाशे टिप्पनम् [पृ० ११८ संपा. उदयसूरिः] ॥
२ बत्तीसमित्यादि० मु.॥ ३ तुलना-बृहत्संग्रहणी मलयगिरिवृत्तिः पृ. १३२ तः। स्थानाङ्गसूत्रवृत्तिः पृ. ३४ ॥

५२ द्वारे
एक-
समयादि-
सिद्धाः
४७७
४७८
प्र.आ.
११४

सिद्ध्यन्त उत्कर्षतः षट् समयान् यावत् प्राप्यन्ते, ततः परमवश्यमन्तरम्, तथा एकषष्ट्यादयो द्विसप्तति-पर्यन्ता निरन्तरं सिद्ध्यन्त उत्कर्षतः पञ्च समयान् यावत्प्राप्यन्ते, ततः ऊर्ध्वं नियमादन्तरम्, तथा त्रिसप्तत्यादयश्चतुरशीतिपर्यन्ता निरन्तरं सिद्ध्यन्त उत्कर्षतश्चतुरः समयान् यावत्प्राप्यन्ते, परतोऽवश्यमन्तरम्, तथा पञ्चाशीत्यादयः षण्णवतिपर्यन्ता निरन्तरं सिद्ध्यन्त उत्कर्षतस्त्रीन् समयान् यावदासाद्यन्ते, परतो नियमादन्तरम्, तथा सप्तनवत्यादयो द्व्युत्तरशतपर्यन्ता निरन्तरं सिद्ध्यन्त उत्कर्षतो द्वौ समयौ यावत्प्राप्यन्ते, परतो नियमादन्तरम्, तथा त्र्युत्तरशतादयोऽष्टोत्तरशतपर्यन्ताः सिद्ध्यन्तो नियमादेकमेव समयं यावत्प्राप्यन्ते, परतोऽवश्यमन्तरं समयादिकम् इति, ✠ जघन्यतः, उत्कर्षतश्च षण्मासान्तरं षण्मासान् यावत् न कोऽपि सिद्ध्यतीत्यत्र सर्वत्र भावना ✠ ॥४७८॥ ५२॥

थीवेए पुंवेए नपुंसए सिज्झमाणपरि[1]संख' त्ति त्रिपञ्चाशत्तमं द्वारं विवरीतुमाह—

वीसित्थीगाउ [2]पुरिसाण अट्ठसयं एगसमयओ सिज्झे ।
दस चेव नपुंसा तह उवरिं समएण पडिसेहो ॥४७९॥
वीस नरकप्पजोइस पंच य भवणवण दस य तिरियाण ।
इत्थीओ पुरिसा पुण दस दस सव्वेऽवि कप्पविणा ॥४८०॥
कप्पट्ठसयं [3]पुहवी आऊ पंकप्पभाउ चत्तारि ।
रयणाइसु तिसु दस दस छ तरुणमणंतरं सिज्झे ॥४८१॥

✠ ✠ चिह्नद्वयमध्यवर्ती पाठः जे. नास्ति ॥ १ सखं' इति-मु. ॥ २ पुरिसा-ता. । ३ पुढवी-जे. ॥

'वीसो'त्यादिगाथाः, एकस्मिन् समये उत्कर्षतः स्त्रियो विंशतिः सिद्धयन्ति, तथा पुरुषाणामष्टोत्तरं शतम् एकसमये सिद्धयति, तथा दशैव नपुंसका एकसमयेन सिद्धयन्ति, उक्तसङ्ख्याया उपरि सर्वत्राप्येकसमयेन सिद्धयतां प्रतिषेधः ।

[1]अथास्मिन्नेव द्वारे कस्या गतेरागताः कियन्त उत्कर्षत एकसमयेन सिद्धयन्तीति विशेषतः प्रतिपादयन्नाह-'वीस नरे'त्यादिगाथाद्वयम्, अग्रतः स्थितस्य 'इत्थीउ'त्ति पदस्य सर्वत्राभिसम्बन्धात् मनुष्याणां स्त्रियः स्त्रीत्वादुद्धृत्य अनन्तरभवे मनुष्यगतावागताः सत्यो यद्येकस्मिन समये सिद्धयन्ति तदा उत्कर्षतो विंशतिरेव, तथा कल्पयोः—सौधर्मेशानयोः स्त्रियः स्वभवादुद्धृता अनन्तरभवे मनुष्यगतिं प्राप्य विंशतिः सिद्धयन्ति, द्वयोरेव कल्पयोः स्त्रिय उत्पद्यन्ते, अतः 'कप्प'त्ति सामान्योक्तावपि सौधर्मेशानयोरित्युक्तम्, एवं ज्योतिषिकाणामपि स्त्रियः स्त्रीत्वादुद्धृता विंशतिः सिद्धयन्ति, तथा भवनपतीनाम्—असुरकुमारादीनां दशानामपि निकायानां व्यन्तराणां द्वात्रिंशज्जातीनां च स्त्रियः स्त्रीत्वादुद्धृताः प्रत्येकं पञ्च पञ्च सिद्धयन्ति, तथा पञ्चेन्द्रियतिरश्चां स्त्रियः स्त्रीत्वादुद्धृत्य दशैव सिद्धयन्ति, पुरुषाः पुनः सर्वेऽपि कल्पव्यतिरिक्ता मनुष्य-ज्योतिष्क-भवनपति-व्यन्तर-तिर्यग्गतिलक्षणस्थानपञ्चकसम्बन्धिनः पुरुषत्वादुद्धृत्य अनन्तरं मनुष्यभवमागता एकसमयेनोत्कर्षतः प्रत्येकं दश दश सिद्धयन्ति, इह 'कल्पं विने'त्युक्तम्, ततः कल्पादुद्धृताः कियन्तः सिद्धयन्ति ?, तत्राह—'कल्पाः' कल्पस्था विमानवासिनो देवा अनन्तरभवे पुरुषत्वं प्राप्य एकसमयेनोत्कर्षतोऽष्टोत्तरं शतं सिद्धयन्ति, तथा 'पृथिव्याः' पृथिवीकायिकेभ्योऽप्कायिकेभ्यश्च तथा पङ्क-



१ तथा० सं. ॥

प्रभाया उद्धृताः सन्तः प्रत्येकं चत्वारश्चत्वारः, तथा 'रयणाइसु'त्ति सप्तम्याः पञ्चम्यर्थत्वेन रत्नादिभ्यो-रत्नप्रभा-शर्कराप्रभा-वालुकाप्रभाभ्यस्तिसृभ्यः पृथिवीभ्यः उद्धृताः प्रत्येकं दश दश, धूमप्रभादिभ्यस्तु तिसृभ्यः पृथिवीभ्य आगता न सिद्ध्यन्ति तथास्वाभाव्यात् , तथा 'तरूण' त्ति षष्ठी पञ्चम्यर्थे, ततस्तरुभ्यो-वनस्पतिकायिकेभ्य उद्धृत्य अनन्तरं मनुष्यभवमागता उत्कर्षत एकस्मिन् समये षडेव सिद्ध्यन्ति, तेजो-वायूनां पुनरनन्तरभवेन मनुष्यत्वस्यैवाप्राप्तेः द्वि-त्रि-चतुरिन्द्रियाणां तु तथाभवस्वाभाव्यादेवानन्तरभवेन सिद्ध्यभाव इति, तथा चोक्तं **प्रज्ञापनायाम्**–

"अणंतरागया णं भंते ! नेरइया एगसमएणं केवइया अंतकिरियं पकरिंति ?, गोयमा ! जहन्नेणं एगो वा दो वा तिन्नि वा उक्कोसेणं दस, रयणप्पभापुढविनेरइयावि एवं चेव जाव वालुयप्पभापुढवीनेरइया, पंकप्पभापुढवीनेरइया उक्कोसेणं चत्तारि, असुरकुमारा दस, असुरकुमारीओ पञ्च, एवं जहा असुरकुमारा सदेवीया तहा जाव थणियकुमारा, पुढवीकाइया चत्तारि, एवं आउकाइयावि, वणस्सइकाइया छ, पंचिंदियतिरिक्खजोणिया दस, पंचिंदियतिरिक्खजोणिणीओवि दस, मणुस्सा दस, मणुस्सीओ वीसं, वाणमंतरा दस, वाणमंतरीओ पञ्च, जोइसिया दस, जोइसिणीओ वीसं, वेमाणिया अट्ठसयं, वेमाणिणीओ वीसं" [तुलना–प्रज्ञापना पद २०-सू.३] इति, सिद्धप्राभृते च देवगतेरन्यत्र गतित्रयेऽपि दशेत्युक्तम् ।

'सेसाण गईण दस दसगं' [गाथा ४८] ति वचनात् , तत्त्वं तु श्रुतविदो विदन्ति, इह च पुंवेदेभ्यो देवादिभ्योऽनन्तरोद्धृता जीवाः केचित्पुरुषाः जायन्ते, केचित् स्त्रियः, केचिन्नपुंसकाः, एवं स्त्रीवेदेभ्योऽपि देवीप्रभृतिभ्य उद्धृतानां भङ्गत्रयम् ,एवं नपुंसकेभ्योऽपि नारकादिभ्यो भङ्गत्रयम् , सर्वसंख्यया भङ्गा नव,

तत्र ये पुंवेदेभ्य उद्धृत्य पुरुषा भूत्वा सिद्ध्यन्ति तेषामेवैकस्मिन् समयेऽष्टोत्तरं शतं सिद्ध्यति, शेषेषु पुनरष्टसु भङ्गकेषु प्रत्येकं दश दशैव, इदमुक्तं भवति–देवेभ्य आगताः पुरुषा भूत्वा एकसमयेनाष्टोत्तरं शतं सिद्ध्यन्ति, स्त्रियो नपुंसकाश्च भूत्वा प्रत्येकं दशैव, देवीभ्यश्चागताः पुरुषा अपि भूत्वा दशैव, एवं स्त्रियो नपुंसकाश्च, यत्तु वैमानिकदेवीभ्यो ज्योतिष्कदेवीभ्यो मानुषीभ्यश्चागता विंशतिः सिद्ध्यन्तीत्युक्तं तत्र पुं-स्त्री-नपुंसकात् द्विकसंयोगतस्त्रिकसंयोगतो वा मिलिताः सन्तो विंशतिः सिद्ध्यन्ति, न पुनः केवलाः पुरुषाः स्त्रियो नपुंसका वा, यदपि विंशतिः स्त्रिय एकसमयेन सिद्ध्यन्तीत्युक्तं तत्रापि काश्चित्पुरुषेभ्यः काश्चित् स्त्रीभ्यः काश्चिन्नपुंसकेभ्य आगताः सत्यो मिलिताः विंशतिः सिद्ध्यन्ति, न पुनः केवलेभ्यः पुरुषेभ्यः केवलाभ्यः स्त्रीभ्यः केवलेभ्यश्च नपुंसकेभ्यः, एवमनया दिशा सर्वेऽपि भङ्गा भावनीयाः, तदुक्तं **सिद्धप्राभृतसूत्रे**–

—"सेसा उ अट्ठ भंगा दसगं दसगं तु होइ [1]इक्केक्को ॥" [ गाथा ५० ] इति,

अपरश्चात्र विशेषो [2]दृश्यते, यथा नन्दनवने चत्वार एकसमये सिद्ध्यन्ति, **'नदनवणे चत्तारि'** [ तुलना-सिद्धप्रा. गाथा ४५ टीका ] इति **सिद्धप्राभृतटीका**वचनात्, एकतरस्मिन् विजये विंशतिः, 'वीसा एगयरे विजये' [सिद्धप्रा. गाथा ४३ टीका ] इति वचनात्, संहरणतः पुनः कर्मभूम्यकर्मभूमि-कूटशैलादिषु सर्वेष्वपि स्थानेष्वेकसमयेनोत्कर्षतो दश दश, पण्डकवने तु संहरणतो द्वौ, पञ्चदशस्वपि कर्मभूमिषु प्रत्येकं जन्मतोऽष्टोत्तरं शतम्, यदुक्तं **सिद्धप्राभृतसूत्रे**—

१ इक्केकं-इति सिद्ध प्राभृत सूत्रे पाठः ॥ २ दृश्यंते- मु. ॥

"[1]संकामणाए दसगं दो चेव हवन्ति पंडगवणंमि । समएण य अट्ठसयं पन्नरससु कम्मभूमीसु ॥ १ ॥" [ गाथा ४५ ] तथोत्सर्पिण्यामवसर्पिण्यां च प्रत्येकं तृतीये चतुर्थे चारकेऽष्टशतम् , अवसर्पिण्यां पञ्चमारके विंशतिः, शेषेष्वरकेषु प्रत्येकमुत्सर्पिण्यामवसर्पिण्यां च संहरणतो दश, उक्तं च सिद्धप्राभृतसूत्रे–

"ओसप्पिणिउस्सप्पिणि तइयचउत्थयसमासु अट्ठसयं । पञ्चमियाए वीसं दसगं दसगं तु सेसासु ॥१॥" [ गाथा ४६ ] तत्र पञ्चम्यां समायामवसर्पिण्याः सम्बन्धिन्यां नोत्सर्पिण्याः, तत्र तीर्थाभावादिति ॥४७९-४८१॥५३॥

इदानीं 'सिद्धाणं संठाणं'ति चतुष्पञ्चाशत्तमं द्वारमाह–

दीहं वा [2]हस्सं वा जं संठाणं तु आसि पुव्वभवे ।
तत्तो तिभागहीणा सिद्धाणोगाहणा भणिया ॥४८२॥ [तु.आव.नि. ९७०]
जं संठाणं तु इहं भवं चयंतस्स चरिमसमयंमि ।
आसीय पएसघणं तं संठाणं तहिं तस्स ॥४८३॥
[3]उत्ताणओ य पासिल्लओ य ठियओ निसन्नओ चेव ।
जो जह करेइ कालं सो तह उववज्जए सिद्धो ॥४८४॥ [आव.नि. ९६९, ९६७]

'दीहे' त्यादिगाथात्रयम् , दीर्घं वा–पञ्चधनुःशतप्रमाणं ह्रस्वं वा हस्तद्वयप्रमाणं वाशब्दान्मध्यमं वा विचित्रम् , यच्चरमभवे आसीत् संस्थानं ततः–तस्मात्संस्थानात् त्रिभागहीना–वदनोदरादिरन्ध्रपूरणात्

१ सकम० मु ॥ २ हस्सं- मु. ॥ ३ उत्ताणउव्व पासिल्लउव्व अहवा नि० इति आव नि पाठः ॥

तृतीयेन भागेन हीना सिद्धानामवगाहना, अवगाहन्ते अस्यामित्यवगाहना—स्वावस्थैव भणिता तीर्थकर-गणधरैरिति, भगवतसंस्थानप्रमाणापेक्षया त्रिभागहीनं तत्र संस्थानमानमिति भावः ॥ ४८२ ॥

एतदेव स्पष्टतरमुपदर्शयति—'यत्संस्थानम्' यावत्प्रमाणं संस्थानम् 'इह' मनुष्यभवे आसीत् तदेव 'भवं' भवन्ति प्राणिनः कर्मवशवर्तिनोऽस्मिन्निति भवं—शरीरं संसारं वा त्यजतः काययोगं परिजिहान-स्येति भावः, चरमसमये सूक्ष्मक्रियाऽप्रतिपातिध्यानबलेन वदनोदरादिरन्ध्रपूरणात् त्रिभागहीनं प्रदेशघनम् आसीत् तदेव प्रदेशघनं मूलप्रमाणापेक्षया त्रिभागहीनं प्रमाणं संस्थानं 'तत्र' लोकाग्रे 'तस्य' सिद्धस्य नान्यदिति ॥४८३॥

तस्य च किमेकेनैवाकारेणावस्थानमुतान्यथाऽपीत्याह—उत्तान एव उत्तानकः पृष्ठतोऽर्धावनता-दिस्थानतः, [2]पार्श्वस्थितो वा—तिर्यग्व्यवस्थितः, स्थितः—ऊर्ध्वस्थानतः, निषण्णश्चैव-उपविष्टः, किंबहुना ? यो यथा' येन प्रकारेणावस्थितः सन् कालं करोति स 'तथा' तेन प्रकारेणोपपद्यते सिद्ध इति ॥४८४॥ ५४॥

इदानीं 'अवठिइठाणं' च सिद्धाणं इति पञ्चपञ्चाशत्तमं द्वारमाह—

ईसिप्पब्भाराए उवरिं खलु जोयणस्स जो कोसो ।
कोसस्स य छब्भाए सिद्धाणोगाहणा भणिया ॥४८५॥ [तु.आव.नि.९६५]
अलोए पडिहया सिद्धा, लोयग्गे य पइट्ठिया ।
[3]इहं बोंदिं चइत्ताणं, तत्थ गंतूण [4]सिज्झइ ॥४८६॥ [औपपातिक सू. ४४।२,आव.नि.९५९]



१ ०हीनप्र० मु. ॥ २ पार्श्वतो-मु.तुलना-आव.हा. टी. (पृ ४४३B) ॥३ इह-मु० । इहं-आ.नि. ॥ ४ ०सिज्झई-आ.नि. ॥

'ईसी'त्यादि गाथाद्वयम्, इह सर्वार्थसिद्धविमानादूर्ध्वं द्वादशभिर्योजनैः पञ्चचत्वारिंशद्योजन-लक्षविष्कम्भा वृत्तत्वादायामतोऽप्येतावन्माना बहुमध्यदेशभागे च आयाम-विष्कम्भाभ्यामष्टयोजनप्रमाणे क्षेत्रेऽष्टयोजनबाहल्या तदनन्तरं सर्वासु [1]दिक्षु च विदिक्षु च प्रदेशहान्या परिहीयमाना परिहीयमाना सर्वेषु चरमान्तेषु मक्षिकापत्रादपि प्रतनुतरत्वादङ्गुलासङ्ख्येयभागमात्रबाहल्या सर्वश्वेतसुवर्णमयी स्फटिकनिर्मला उत्तानच्छत्रसंस्थिता घृतभृततथाविधकरोटिकाकारा च ईषत्प्राग्भारा नाम सिद्धशिला भवति, स्थापना चेयम्— ◡ ,सर्वार्थाद् द्वादशभिर्योजनैर्लोकान्त इत्यन्ये, तस्याश्चेषत्प्राग्भाराया उपरि योजने गते लोकान्तो भवति, तस्य च योजनस्य य उपरितनक्रोशः—चतुर्थं गव्यूतम्, तस्य च क्रोशस्य सर्वोपरितने षष्ठे भागे—त्रयस्त्रिंशदधिकानि त्रीणि धनुःशतानि धनुस्त्रिभागश्चेत्येवंरूपे सिद्धानामवगाहना—अवस्थितिर्भणिता, एतावत्या एवोत्कर्षतः सिद्धावगाहनाया भावात्, यदुक्तम्—

तिन्नि सया तेत्तीसा धणुत्तिभागो य कोस छब्भाओ। जं परमोगाहोऽयं तो ते कोसस्स [2]छब्भागे ॥१॥
[आव.नि.९६६] ॥४८५॥

तथा [3]'अलोए' इह सप्तमी तृतीयार्थे अलोकेन—केवलाकाशास्तिकायरूपेण 'प्रतिहताः' स्खलिताः सिद्धाः, इह च तत्र [4]धर्मास्तिकायाद्यभावात्तदानन्तर्यवृत्तिरेव प्रतिस्खलनम्, न तु सम्बन्धे सति

१ दिक्षु वि॰-मु॰ ॥ २ छब्भागो-इति श्रीचन्द्रमहर्षिप्रणीते सङ्ग्रहणीसूत्रे (गाथा २८२)। छब्भाए-आ.नि ॥ ३ अलोके इति श्लोकः सप्तमी॰-सं॰॥ ४ तुलना-आवश्यक.हा.टी.पृ॰ (४४२B), आवश्यक.मलय॰ टी॰ ५४२B॥

विघातोऽप्रतिघातत्वात्[1] , सप्रतिघातानां हि सम्बन्धे सति विघातो नान्येषाम् इति, तथा **'लोकस्य'** पञ्चास्तिकायात्मकस्याग्रे—मूर्धनि **'प्रतिष्ठिताः'** अपुनरागत्या व्यवस्थिताः, तथा **'इह'** मनुष्यक्षेत्रे **'बोन्दिं'** तनुं त्यक्त्वा 'तत्र' लोकाग्रे समयान्तरप्रदेशान्तरास्पर्शनेन गत्वा **'सिद्ध्यन्ति'** निष्ठितार्था भवन्ति, अत्रानुस्वारलोपो द्रष्टव्यः, अथवा एकवचनतोऽप्येवमुपन्यासः सूत्रशैल्या अविरुद्ध एव, तथा चान्यत्रापि दृश्यते—

'वत्थगंधमलंकारं, इत्थिओ सयणाणि य । अच्छंदा जे न भुंजंति, न से चाइत्ति वुच्चइ ॥१॥"
[दशवै. २।२] ॥४८६॥५५॥

सम्प्रति **'अवगाहणा य तेसिं उक्कोस'**त्ति षट्पञ्चाशत्तमं द्वारमाह—

**तिण्णि सया तेत्तीसा धणुत्तिभागो य होइ बोद्धव्वो ।**
**एसा खलु सिद्धाणं उक्कोसोगाहणा भणिया ॥४८७॥** [आव.नि. ९७१]

**'तिन्निसया'** इत्यादि, धनुषां त्रीणि शतानि त्रयस्त्रिंशदधिकानि धनुषस्तृतीयभागश्च भवति बोद्धव्यः, एषा खलु सिद्धानामुत्कृष्टाऽवगाहना भणिता । इयमत्र भावना—सिद्धगमनयोग्योत्कृष्टावगाहनायाः पञ्चधनुःशतरूपायास्तृतीयो भागः षट्षष्ट्यधिकं धनुःशतं चतुःषष्टिश्चाङ्गुलानि, स च सिद्धिगमनकाले वदनोदरादिविवरपूरणेन सङ्कोचित इति धनुःशतपञ्चकात्पात्यते, ततः शेषमुत्कृष्टा सिद्धावगाहनेति, यत्पुनः



---

1 त्वात् सप्रतिघातत्वात् सप्रति° सं. ॥

पञ्चविंशत्यधिकपञ्चधनुःशतप्रमाणमुत्कृष्टमवगाहनामानं सिद्धिगमनयोग्यानां मरुदेवीप्रभृतीनां क्वापि श्रूयते तदादेशान्तरेण ज्ञातव्यम् ॥ ४८७ ॥ ५६ ॥

इदानीं 'मज्झिमसिद्धोगाहण' त्ति सप्तपञ्चाशत्तमं द्वारमाह—

**चत्तारि य रयणीओ रयणि तिभागूणिया य बोद्धव्वा ।**
**एसा खलु सिद्धाणं मज्झिमओगाहणा भणिया ॥४८८॥** [ आव. नि. ९७२]

'**चत्तारि य**' गाहा, चतस्रो रत्नयो-हस्ता रत्निश्च त्रिभागोना बोद्धव्या,एषा खलु सिद्धानां मध्यमावगाहना भणिता, श्रीमहावीरस्य हि भगवतः सप्त हस्ताः शरीरमानम् , ततः सिद्धावस्थायां शुषिरपूरणायाऽङ्गुलाष्टकाधिकहस्तद्वयरूपे त्रिभागे समुत्सारिते शेषं चत्वारो हस्ताः षोडश चाङ्गुलानि मध्यमावगाहनेति, उपलक्षणं चैतत् , तत उत्कृष्टायाः सिद्धावगाहनाया अधो जघन्यायाश्चोपरि सर्वापि मध्यमावगाहना भवतीत्यवगन्तव्यम् , [1]आह—जघन्यपदे सप्तहस्तोच्छ्रितानामागमे सिद्धिरुक्ता तत एषा जघन्या प्राप्नोति कथं मध्यमा ?, तदयुक्तम्, वस्तुतत्त्वापरिज्ञानात् , जघन्यपदे हि तीर्थंकरापेक्षया [2]सप्तहस्तोच्छ्रितानां सिद्धरुक्ता, सामान्यकेवलिनां तु हीनप्रमाणानामपि भवति, इदमपि चावगाहनामानं चिन्त्यते सामान्यसिद्धापेक्षया, ततो न कश्चिद्दोषः ॥४८८॥५७॥

१ तुलना—औपपातिकसूत्रवृत्तिः पृ. २१७ ॥ २ सप्तहस्तानां- मं. ॥

५८ द्वारे जघन्यावगाहना गाथा ४८९

इदानीं 'जहन्न सिद्धोगाहण'त्यष्टपञ्चाशत्तमं द्वारमाह—

**एगा य होइ रयणी अट्ठेव य [1]अंगुलाइ साहीया ।**
**एसा खलु सिद्धाणं जहण्णओगाहणा भणिया ॥४८९॥** [ आव.नि.९७३]

'एगा य' गाहा [2]एका च भवति रत्निः परिपूर्णा अष्टौ चाङ्गुलान्यधिकानि एषा खलु सिद्धानां जघन्यावगाहना भणिता तीर्थंकरगणधरैः, सिद्धिगमनयोग्यानां हि जघन्या अवगाहना हस्तद्वयप्रमाणा, ततः शुषिरपूरणाय पोडशाङ्गुललक्षणे त्रिभागे पातिते सति अङ्गुलाष्टकाधिक एको हस्तो जघन्यावगाहना भवति, एषा च [3]कूर्मापुत्रादीनां द्विहस्तानामवसेया, [4]यदि वा सप्तहस्तोच्छ्रितानामपि यन्त्रपीलनादिना संवर्तितशरीराणामिति ॥४८९॥५८॥

५९ द्वारे शाश्वतिप्रतिमाः गाथा ४९० प्र.आ.११७

इदानीं **'सासयजिणपडिमानामाइं'** त्येकोनषष्टं द्वारमामन्त्रणपूर्वमाशिषा प्राह—

**सिरि उसहसेणपहु १ वारिसेण २ सिरिवद्धमाणजिणनाह ३ ।**
**चंदाणणजिण ४ सव्वेवि भवहरा होह मह तुब्भे ॥४९०॥**

**सिरिउसभे'**त्यादि श्रीवृषभसेनप्रभो ! वारिषेण ! श्रीवर्धमानजिननाथ ! चन्द्राननजिन ! सर्वेऽपि यूयं **'भवहराः'** संसारनिर्नाशका [5]भवत ममेति ॥४९०॥५९॥



---

१ अंगुलाइं-ता. पो. ॥ २ तुलनार्थं विशेषार्थं द्रष्टव्या आवश्यकसूत्रस्य मलयगिरिसूरिकृता टीका पृ. ५४५ ॥
३ कूर्मपुत्रा० मु ॥ ४ यद्वा-मु. ॥ ५ भवंत-सं. ॥

सम्प्रति [1]'जिणकप्पिओवगरणसंख' त्ति षष्टितमं द्वारमाह–

[2]पत्तं पत्ताबंधो पायट्ठवणं च पायकेसरिया ।
पडलाइं रयत्ताणं च गुच्छओ पायनिज्जोगो ॥४११॥
तिन्नेव य पच्छागा रयहरणं चेव होइ मुहपोत्ती ।
एसो दुवालसविहो उवही जिणकप्पियाणं तु ॥४१२॥ [ओघनि. ६६८-६६६]
जिणकप्पियावि दुविहा पाणीपाया पडिग्गहधरा य ।
पाउरणमपाउरणा एक्केक्का ते भवे दुविहा ॥४१३॥
[3]दुग १ तिग २ चउक्क ३ पणगं ४ नव ५ दस ६ एक्कारसेव ७ बारसगं ८
एए अट्ठ विगप्पा जिणकप्पे हुंति उवहिस्स ॥४१४॥
[तुलना – निशीथभाष्य १३९०-१, पञ्चवस्तु ७७५]
पुत्ती रयहरणेहिं दुविहो तिविहो य एक्ककप्पजुओ ।
चउहा [4]कप्पदुगेणं कप्पतिगेणं तु पंचविहो ॥४१५॥
दुविहो तिविहो चउहा पचविहोऽवि हु सपायनिज्जोगो ।
जायइ नवहा दसहा एक्कारसहा दुवालसहा ॥४१६॥



---

१ जिनकप्गिोपगरण० मु. ॥ २ एतद्(४११-४१२) गाथाद्वय बृ. क. भाष्ये ३९६२-३ क्रमाङ्केन, क्रमाङ्केनाऽपि उपलभ्यते ॥ ३ बिअ तिअ-इति पचवस्तुके पाठः(७७५) ॥ ४ कप्पदुएणं-मु. । कप्पजुएणं-जे. ।

अहवा दुगं च नवगं उवगरणे हुंति दुन्नि उ विगप्पा ।
पाउरणवज्जियाणं विसुद्धजिणकप्पियाणं तु ॥४९७॥ [निशीथ भा. १३९२]
तवेण [1]सुत्तेण सत्तेण एगत्तेण बलेण य ।
तुलणा पंचहा वुत्ता, जिणकप्पं पडिवज्जओ ॥४९८॥ [बृ. क. भा. १३२८]

'पत्तं पत्ताबंधो इत्यादि [2]गाथाष्टकम्, [3]उपक्रियते व्रती अनेनेत्युपकरणम्—उपधिरित्यर्थः, स चोपधिर्द्विधा-औघिक औपग्रहिकश्च, ओघः-प्रवाहः सामान्यमितियावत् तत्र भव औघिको नित्यमेव यो गृह्यते इत्यर्थः, [4]उप—आत्मनः समीपे संयमोपष्टम्भार्थं वस्तुनो ग्रहणमुपग्रहः स प्रयोजनमस्येत्यौपग्रहिकः, कारणे आपन्ने संयमयात्रार्थं [5]यो गृह्यते न पुनर्नित्यमेव स औपग्रहिक इत्यर्थः, तत्र औघिक उपधिर्द्विविधो—गणनाप्रमाणेन प्रमाणप्रमाणेन च, तत्र गणनाप्रमाणमेकद्वित्र्यादिरूपम्, प्रमाणप्रमाणं तु दीर्घपृथुत्वादिरूपम् , एवमौपग्रहिकोपधेरपि भेदद्वयं भणनीयम् , तत्र औघिकोपधिर्गणनाप्रमाणतो जिनकल्पिकानामिह प्रतिपाद्यते, तत्र पात्रं—पतद्ग्रहः १, पात्रबन्धो येन पात्रं धार्यते वस्त्रखण्डेन चतुरस्रेण २, पात्रकस्थापनं कम्बलमयं यत्र पात्रकाणि स्थाप्यन्ते ३, पात्रकेसरिका—पात्रप्रत्युपेक्षणिका या [6]चिलिमिलिकेति प्रसिद्धा ४, पटलानि यानि भिक्षां भ्रमद्भिः पात्रोपरि दीयन्ते ५, रजस्त्राणानि—

१ 'सत्तेण सुत्तेण'-इति बृ क भाष्ये(गाथा १३२८) अत्रैव च ५४० तमगाथाटीकायां पाठः॥ २ ०गाथाद्वयं-सं. ॥ ३ तुलना-ओघनि. टीका पृ. २०८तः,बृ. क. टी. पृ. १०८७, पञ्चवस्तुटीका पृ. १२० , धर्मसङ्ग्रह टीका पृ. ६३ ॥ ४ उपः-आत्मन.-मु० ॥ ५ योपगृह्यते-जे. ॥ ६ चिलिमिलिका जवनिकार्थे प्रसिद्धा, पात्रप्रत्युपेक्षणिकार्थे न दृश्यते ।

पात्रवेष्टनकानि ६, प्राकृतत्वाच्च सूत्रे एकवचननिर्देशः गोच्छकः—कम्बलखण्डमयो यः पात्रकोपरि दीयते ७, अयं सप्तविधः पात्रनिर्योगः, पात्रपरिकर इत्यर्थः ॥४९१॥

तथा त्रय एव प्रच्छादकाः—प्रावरणरूपाः कल्पा इत्यर्थः, द्वौ सूत्रमयावेक ऊर्णामयो ३, रजोहरणं ४ चैव भवति मुखपोतिका ५, एष उत्कर्षतो द्वादशविध [1]उपधिर्जिनकल्पिकानां भवति ॥४९२॥

ननु जिनकल्पिका एकस्वरूपा एव भवन्त्याहोश्वित्पृथक्स्वरूपा अपीत्याह—'जिणकप्पिका' इत्यादि, जिनानां कल्पः आचारो जिनकल्पः स विद्यते येषां ते ◁'अत इनिठना'विति (पा०५-२-११५) ठनि ▷ जिनकल्पिकाः, अपिः पुनरर्थो, जिनकल्पिकाः पुनर्द्विविधा—द्विभेदाः, तावेव भेदावाह—पाणी एव पात्रं येषां ते पाणिपात्राः—पाणिपात्रभोजिन एके, पतद्ग्रहधराः—पतद्ग्रहभोजिनो द्वितीयाः, ते पुनरेकैके द्विभेदा भवेयुः—सप्रावरणा अप्रावरणाश्च, अत्र च सूत्रे प्राकृतत्वात्सलोपो द्रष्टव्यः ॥४९३॥

ननु जिनकल्पिकानां द्वादशविध उपधिरभिदधे स किं सर्वेषामेकविध एव भवति ?, नेत्याह—'दुगतिगे'त्यादि, द्विकं [2]त्रिकं चतुष्कं पञ्चकं नवकं दशकं एकादशकं द्वादशकमित्येतेऽष्टौ विकल्पा जिनकल्पे भवन्त्युपधेरिति ॥४९४॥

---

१ "एकग्रहणे तज्जातीयानां सर्वेषा ग्रहणम्" ति न्यायात् अन्येऽपि ये गच्छनिर्गतास्तेषां यथायोगमिदमेवोपकरण-मवसातव्यम् ।" इति बृ क. टी. (पृ-१०८७) ॥ ◁▷ चिह्नद्वयमध्यवर्ती पाठः सं. नास्ति ॥ २ तृकं-जे. ॥

तानेवव्याचष्टे—'पुत्तीरयहरणेहिं' इत्यादिगाथाद्वयम्, मुखपोतिका-रजोहरणाभ्यां द्विविधः, कोऽर्थः ?—मुखपोतिका-रजोहरणलक्षणमुपकरणद्वयमेव पाणिपात्राः प्रावरणवर्जिता जिनकल्पिका धारयन्ति, तथा तेषामेव सप्रावरणानामेकेन कल्पेन युक्तः सन् पूर्वोक्त उपधिस्त्रिविधो भवति, तथा स एव मुखवस्त्रिका-रजोहरणरूप उपधिः कल्पद्वयेन सहितश्चतुर्विधः, कल्पत्रयेण संयुक्तः पुनः पञ्चविधो भवति, तथा पूर्वोक्त एव द्विविधस्त्रिविधश्चतुर्विधः पञ्चविधश्च उपधिः सप्तविधपात्रनिर्योगसहितः सन् यथाक्रमं नवविधो दशविध एकादशविधो द्वादशविधश्चजायते, तत्र रजोहरण-मुखपोतिका सप्तविधपात्रनिर्योगसहितो नवविध उपधिः पात्रभोजिनामप्रावरणानां ज्ञेयः, शेषस्तु दशविध एकादशविधो द्वादशविधश्च सप्रावरणानां पात्रभोजिनामिति ॥४९५-४९६॥

अथ सूत्रकृदेवाप्रावरणानामुपकरणसङ्ख्यामाह— [1]'अहवे' त्यादि, पूर्वं सामान्यतो जिनकल्पिकोपधेरष्टौ भेदाः प्रतिपादिताः, अथवा द्विकं नवकं चेति द्वावेव भेदौ, तत्र द्विकं रजोहरणमुखपोतिकारूपं नवकं तु रजोहरणमुखपोतिकासप्तविधपात्रनिर्योगलक्षणम्, इह च ये प्रावरणवर्जितास्ते स्वल्पोपधित्वेन विशुद्धजिनकल्पिका भण्यन्ते, तेषामेवेदं द्विकनवकलक्षणं भेदद्वयम्, अविशुद्धजिनकल्पिकानां तु पूर्वोक्ता एव भेदा इति ॥४९७॥

जिनकल्पप्रतिपत्तिश्च परिकर्मणापूर्विकैव भवति अतः पूर्वं परिकर्मणाप्रतिपादनार्थमाह—'तवेणे' त्यादि, तोल्यते—परीक्ष्यते आत्मा यया सा तुलना—परिकर्मणा आत्मनो जिनकल्पाङ्गीकरणं प्रति परीक्षण-

१ 'अहवा' गाहा पूर्वं-सं. ॥

मित्यर्थः, सा पञ्चधा–पञ्चभेदा उक्ता जिनकल्पं प्रतिपद्यमानस्य, कथमिति तत्राह–'तपसा' चतुर्थादिषण्मासान्ततपोऽभ्यासेनात्मानं भावयति, यद्येतावत्तपः कुर्वाणः प्रथममेव न बाध्यते तदा जिनकल्पं प्रतिपद्यते, नान्यथेति भावः १, 'सूत्रेण' नवपूर्वादिलक्षणेन जिनकल्पोचितेन तथाऽभ्यासं करोति यथा पश्चानुपूर्व्यादिक्रमेण तत्परावर्तयितुं शक्नोति २, 'सत्त्वेन' मानसिकावष्टम्भलक्षणेनात्मानं तथा तोलयति यथा शून्यगृह–चत्वर–श्मशानादिस्थानेषु भयजनकेषु कायोत्सर्गादिकरणसमये निसर्गनिरर्गलदुर्गोपसर्गपरीषहादिभिरक्षोभ्यो भवति ३, एकत्वेनात्मानं भावयति, एकाक्येव पर्यटन् यदि [1]विश्रोतसिकादिभिः न बाध्यते तदा जिनकल्पं प्रतिपद्यते, नान्यथेति ४, 'बलेन' एकाङ्गुष्ठाद्यवष्टम्भतश्चिरस्थायित्वादिरूपेण शारीरेण धृतिरूपेण च मानसेनावष्टम्भेनात्मानं परीक्षयतीति ५, एतैः पञ्चभिः प्रकारैस्तुलनां विधाय पश्चाज्जिनकल्पप्रतिपत्तिः करणीयेति ॥४९८॥

इदानीं 'थविरकप्पोवगरणाइ'ति एकषष्टितमं द्वारमाह—

[2]एए चेव दुवालस मत्तग अइरेग चोलपट्टो उ ।
एसो चउदसरूवो उवही पुण थेरकप्पंमि ॥४९९॥

---

१ 'विस्रोतसिका' तद्रूपसदर्शनस्मरणापध्यानकचवरनिरोधतः ज्ञानश्रद्धाजलोज्झनेन संयमस(श)स्यशोषफला चित्तविक्रियेति सूत्रार्थः ॥९॥ दशवै हा. टी. ५–९ ॥

२ एतद् गाथापञ्चकम् (४९९-५०३) पञ्चवस्तुके ७७९, ७९२, ७९८, ७९९, ८०६ क्रमाङ्केन, गाथाद्वयम् (४९९-५००) बृहत्कल्पसूत्रे ३९६४, ४०१३ क्रमाङ्केन उपलभ्यते । तुलना-बृ.क. भा. ३९६४, ४०१३, ३९७१, ३९८२ ॥

तिण्णि विहत्थी चउरंगुलं च भाणस्स मज्झिमपमाणं ।
एत्तो हीण जहन्नं अइरेगयरं तु उक्कोसं ॥५००॥
[1]पत्ताबंधपमाणं भाणपमाणेण होइ कायव्वं ।
जह गंठिमि कयंमि ३ कोणा चउरंगुला हुंति ॥५०१॥
जह गंठिमि कयंमि य पायपडिलेहणी चेव ।
पत्तगठवणं तह गुच्छगो य पायपडिलेहणी चेव ।
तिण्हंपि उ प्पमाणं विहत्थी चउरंगुलं चेव ॥५०२॥
अड्डाइज्जा हत्था दीहा छत्तीसअंगुले रुंदा ।
बीयं पडिग्गहाओ ससरीराओ य निप्फण्णं ॥८॥५०३॥
[तुलना–ओघनि. ६७०-६८०-६९३-६९४-७०१]

[2]कयलीगब्भदलसमा पडला उक्किट्ठमज्झिमजहण्णा ।
गिम्हे हेमंतंमि य वासासु य पाणरक्खट्ठा ॥५०४॥
तिण्णि चउ पंच गिम्हे चउरो पंचच्छगं च हेमंते ।
पंच च्छ सत्त वासासु होंति घणमसिणरूवा ते ॥५०५॥



१ तुलना-बृ.क. भा ३९७१ ॥ २ तुलना–बृहत्कल्पसूत्रम् गाथा ३९७३तः, पञ्चवस्तुकः गाथा ८०२ तः ॥

[1]माणं तु [2]रयत्ताणे भाणपमाणेण होइ निप्फन्नं ।
पायाहिणं करंतं मज्झे चउरंगुलं कमइ ॥५०६॥
कप्पा आयपमाणा अड्ढाइज्जा य [3]वित्थडा हत्था ।
दो चेव सुत्तियाओ [4]उण्णिय तइओ मुणेयव्वो ॥५०७॥
बत्तीसंगुलदीहं [5]चउवीसं अंगुलाइं दंडो से ।
अट्ठंगुला दसाओ एगयर होणमहियं वा ॥५०८॥
[6]चउरंगुलं विहत्थी एय मुहणंतगस्स उ पमाणं ।
बीओऽवि य आएसो मुहप्पमाणेण निप्फण्णं ॥५०९॥
जो मागहओ पत्थो सविसेसयरं तु मत्तगपमाणं ।
दोसुवि दव्वग्गहणं वासावासे य अहिगारो ॥५१०॥
सूवोयणस्स भरियं [7]दुगाउ अद्धाणमागओ साहू ।
भुंजइ एगट्ठाणे एय किर मत्तगपमाणं ॥५११॥
दुगुणो चउग्गुणो वा हत्थो चउरस्स चोलपट्टो उ ।

१ एतद् गाथा सप्तकम (५०६-५१२) पञ्चवस्तुके ८०८, ८१२, ८१४, ८१६, ८१८, ८१९, ८२१ क्रमाङ्केषु स्वल्प-पाठभेदेन उपलभ्यते ॥ २ रयणत्ताणे मु ॥ ३ वित्थरा-जे- ॥ ४ उण्णिओय-जे. । उन्निओ अ-इति पंचवस्तु ८१२ ॥ ५ चउवीसंगुला दंडो सो-सं.॥ ६ तुलना बृ.क.भा.३९८२॥ ७ दुगाउमद्धा० जे. ॥

थेर-जुवाणाणट्ठा सण्हे थुल्लंमि य विभासा ॥५१२॥
[1]संथारुत्तरपट्टो अड्ढाइज्जा य आयया हत्था ।
दोण्हंपि य वित्थारो हत्थो चउरंगुल चेव ॥५१३॥
[2]आयाणे [3]निक्खिवणे ठाणे निसियण-तुयट्ट-संकोए ।
पुव्विं पमज्जणट्ठा लिंगट्ठा चेव रयहरणं ॥५१४॥
संपाइमरयरेणू पमज्जणट्ठा वयंति मुहपोत्तीं ।
नासं मुहं च बंधइ तीए वसहिं पमज्जंतो ।५१५॥
छक्कायरक्खणट्ठा पायग्गहणं जिणेहिं पन्नत्तं ।
जे य गुणा संभोगे हवंति ते पायगहणेऽवि ॥५१६॥
तणगहणानलसेवानिवारणा धम्मसुक्कझाणट्ठा ।
दिट्ठं कप्पग्गहणं गिलाणमरणट्ठया चेव ॥५१७॥
वेउव्वऽवाउडे वाइए य ही खद्धपजणणे चेव ।
तेसिं अणुग्गहट्ठा लिंगुदयट्ठा य पट्टो य ॥५१८॥ [तुलना-ओघनिर्युक्तिः ७०३ ७०५, ७०८, ७११, ७१३, ७१४, ७२१, ७२३, ७१०, ७१२, ६९१, ७०६, ७२२]



---

१ तुलना-बृ.क.भा ३९८० ॥ २ एतद् गाथापञ्चकम् (५१४-५१८) पञ्चवस्तुके ८१५,८१७, ८१०, ८१३, ८२२ क्रमाङ्केषु, स्वल्पपाठभेदेन विद्यते ॥ ३ निक्खमणे-मु-॥ निक्खेवे ठाण० इति पञ्चवस्तुके ८१५, ओघनिर्युक्तौ च पाठः ॥

'एए' इत्यादि [1]गाथा विंशतिः, एत एव-अनन्तरोदिता जिनकल्पिकसम्बन्धिनः पात्रकाद्या मुखवस्त्रिकापर्यन्ता द्वादश उपधिभेदाः, अतिरिक्तं च मात्रकं चोलपट्टकश्च, एष चतुर्दशविध उपधिः पुनः 'स्थविरकल्पे' स्थविरकल्पविषये भवति गणनाप्रमाणेनेति ॥४९९॥

इदानीं पात्रकस्य प्रमाणमाह–'तिन्नो विहत्थो' त्यादि, तिस्रो वितस्तयश्चतरङ्गुलं च चतुर्णामङ्गुलानां समाहारश्चतुरङ्गुलं चत्वार्यङ्गुलानि चेत्यर्थः, इदं भाजनस्य मध्यमं [2]प्रमाणम्, अयमर्थः– [3]वर्तुलस्य सर्वतः समचतुरस्रस्य सुप्रतिष्ठानस्य निश्छिद्रस्य निर्व्रणस्य स्निग्धवर्णोपेतस्य पात्रस्य परिधिर्दवरकेण मीयते, तत्र च मिते यदा मानदवरकस्तिस्रो वितस्तयश्चत्वारि चाङ्गुलानि भवन्ति तदा तत्पात्रं

---

१ गाथा एत-सं० तुलना– बृ. क. टीका पृ. १०८७, १०८९, १०९२ । पञ्चवस्तुटीका पृ. १२२ तः, धर्मसङ्ग्रहटीका भा २ पृ. ६५ त. ॥ २ 'तथा इदमपरं प्रमाणान्तरं प्रकारान्तरेण पात्रकस्य प्रमाणं भवति-'इणमन्नं तु पमाणं, नियगाहारा उ होइ निप्फन्न । कालपमाणसिद्ध उदरपमाणेण य वयंति ॥ ओघनि. ६८१ ॥ इदमन्यत्प्रमाणं निजेनाहारेण निष्पन्नं वेदितव्यम् । एतदुक्तं भवति - काञ्जिकादिद्रवोपेतस्य चतुर्भिरङ्गुलैरूनं पात्रकम्, तत्साधोर्भक्षयतो यत्परिनिष्ठितं याति तत्तादृग्विधं मध्यमप्रमाणं पात्रकम्, तच्चैवंविधं कालप्रमाणेन ग्रीष्मकाले प्रमाणसिद्ध पात्रकं भणन्ति ........ - 'उक्कोसतिसामासे दुगाउमद्धाणमागओ साहू । चउरंगुलूणभरियं ज पज्जत्त तु साहुस्स' ॥ ओघनि. ६८२ ॥ उत्कृष्टा तृड् मासयोः ज्येष्ठाषाढयोः यस्मिन् काले स उत्कृष्टतृण्मासः कालः, तस्मिन्नुत्कृष्टतृण्मासकाले द्विगव्यूताध्वानमात्रादागतः यो भिक्षुश्चतुर्भिरङ्गुलैर्न्यूनं भृतं सत् यत् पर्याप्त्या साधोर्भवति तदित्थं भूतं कालप्रमाणोदरप्रमाणसिद्धं पात्रकं मध्यमं भवति" ॥ इति तत्रैव द्रोणाचार्यकृतटीकायाम् पृ. २१० ॥

३ तुलना 'समचउरसं वट्टं दोरएण भविज्जइ तिरिच्छियं उड्ढमहो य, सो य दोरओ तिण्णि विहत्थीओ चत्तारि अंगुलाइं जति होइ ततो भाणस्स एयं मज्झिमं पमाणं।" ओघनि. ६८० द्रोणाचार्यटीका पृ. २१० ॥ तुलना–बृ.क.गा.४० तः २२॥

मध्यमप्रमाणं भवति, 'इतो' मध्यमप्रमाणात् पात्रकात् हीनं द्विवितस्त्येकवितस्त्यादिमानं यत्पात्रं तज्जघन्यम् 'अतिरिक्ततर तु' मध्यमप्रमाणात्तद्बृहत्तरमुत्कृष्टं भवति ॥५००॥

[1]पात्रबन्धप्रमाणमाह–'पत्ते'त्यादि, पात्रबन्धप्रमाणं भाजनप्रमाणेन भवति करणीयम्, यदि मध्यमं पात्रं भवति तदा पात्रबन्धकोऽपि (ग्रन्थाग्रं ५०००) तत्प्रमाणः कार्यः, अथ जघन्यं तदा सोऽपि तदनुसारेण करणीयः, अथोत्कृष्टप्रमाणं पात्रं तदा सोऽपि गुरुतरः कार्यः, किं बहुना ?, यथा ग्रन्थौ 'कृते' दत्ते सति 'कोणाः' ग्रन्थेरञ्चलाश्चतुरङ्गुला भवन्ति तथा पात्रबन्धकः कार्य इति ॥५०१॥

अथ पात्रस्थापनक-गोच्छक-पात्रप्रत्युपेक्षणिकानां प्रमाणमाह– 'पत्तगे'त्यादि, अथ पात्रकस्थापनं तथा गोच्छकस्तथा पात्रप्रतिलेखनी च एतेषां [2]त्रयाणामपि प्रमाणमेका वितस्तिश्चतुर्भिरङ्गुलैरधिका षोडशाङ्गुलानीत्यर्थः, प्रयोजनं तु पात्रबन्ध-पात्रस्थापनयो रजःप्रभृतिरक्षणम्, गोच्छकस्य भाजनवस्त्राणां पटलादीनां प्रमार्जनम्, केशरिकायास्तु पात्रप्रमार्जनमिति, उक्तं च—

" [3]रयमाइरक्खणट्ठा पत्तावंधो य पायठवणं च । होइ [4]पमज्जणहेउं तु गुच्छओ भाणवत्थाणं ॥१॥

---

१ तुलना "जं च समचउरंसं तस्स जा बाहिरतो परिही तेण भायणप्पमाणेण पत्तगबंधो कायव्वो, जं पुण विसमं तस्स जा परिही महततरी तेणप्पमाणेण पत्तगबंधो कायव्वो, अहवा गंठीए कयाए जहा पत्तगबंधकण्णा चउरंगुला भवंति–गंठीए अतिरित्ता भवंतीत्यर्थः" ॥ इति निशीथचूर्णि भा. ४ । पृ.१३८ ॥ गाथा ५७६० ॥

२ 'अत्र द्वे ऊर्णामये, पात्रमुखवस्त्रिका च क्षौमिकी" इति ध. सं. टी. (भा. २–पृ ६५) ॥

३ अस्य हरिभद्रसूरिभिरेव कृता व्याख्या-"रजःप्रभृतिरक्षार्थं पात्रबन्धश्चोक्तलक्षणः, पात्रस्थापनं च भवति प्रमार्जनहेतोः, एतन्निमित्तमेव गोच्छकः भाजनवस्त्राणां-पटलादीनामिति गाथार्थः ॥८००॥ पात्रप्रमार्ज्जनहेतोः किमित्याह-केसरिका अत्र भवति ज्ञातव्या" इति पञ्चवस्तुटीका पृ. १२४ A ॥ ४ पमज्जणहेउं गु० मु. ॥

पायपमज्जणहेउं केसरिया इत्थ होइ णयव्वा ॥'' (पञ्चवस्तु ८००-८०१) ॥५०२॥

अथ पटलानां [1]प्रमाणमाह—'अड्ढे' त्यादि, अर्धतृतीयान् हस्तान् सार्धौ द्वौ हस्तौ दीर्घाणि -आयतानि षट्त्रिंशदङ्गुलानि एको हस्तो द्वादशाङ्गुलानि चेत्यर्थो [2]रुन्द्राणि–विस्तीर्णानि पटलकानि भवन्ति, अथवा द्वितीयमिदं प्रमाणं–पतद्ग्रहात् स्वशरीराच्च निष्पन्नम्, कोऽर्थः १–महति पात्रके स्थूले शरीरे लघुतरे पात्रके कृशे शरीरे वा पटलकान्यपि तदनुसारेण करणीयानि ॥५०३॥

तानि च कीदृशानि भवन्तीत्याह— कयली' त्यादि, कदलीगर्भदलसमानि शुक्लानि मसृण-श्लक्ष्णानि घनानि चेत्यर्थः क्षौमाणि पटलान्युत्कृष्ट-मध्यम-जघन्यभेदभिन्नानि भवन्ति, [3]उत्कृष्टत्व-मध्यमत्व-जघन्यत्वानि तु शोभनत्वादिस्वरूपापेक्षया परिगृह्यन्ते, न तु सङ्ख्यापेक्षया, तानि च 'ग्रीष्मे' उष्णकाले 'हेमन्ते' शीतकाले 'वर्षासु च' वर्षाकाले प्रत्येकं २ त्रिविधानि ज्ञेयानि, तानि च किमर्थं

---

१ तुलना-''अथ प्रमाणप्रमाणम्-तत्र च विशेषचूर्णिः-गच्छनिग्गयाणं चउरंसा पडला, जं भाणो मज्झे कए हेट्ठा अट्ठ अंगुलाइं लंबंति । गच्छवासीणं जं उग्गाहिए समाणे चउहिं अंगुलेहिं जन्तुए न पावति, अहवा दीहत्तणेण अड्ढाइज्जा हत्था, रुंदत्तणेण दिवड्ढो हत्थो'' इति बृहत्कल्प. टीका पृ. १०९०॥

२ रुन्दानि- इति पचवस्तुटीका (८०६)॥ रुंदा'-इति ध.सं. टीका. (भा. २। पृ. ६६)॥

३ तुलना-''तत्र यानि अत्यन्तदृढानि तान्युत्कृष्टानि, दृढ-दुर्बलानि मध्यमानि, दुर्बलानि जघन्यानि'' इति । बृ. क. ३९७३ । टीका (पृ. १०९०)॥

क्रियन्ते ?, तत्राह—'प्राणरक्षार्थं' सम्पातिमादिजीवरक्षणनिमित्तम् , उपलक्षणत्वात्पक्षिपुरीष-पांशुपातादि-रक्षणार्थं लिङ्गसंवरणार्थञ्च, [1]एतदुक्तं भवति—अस्थगिते पात्रके सम्पातिमाः सत्त्वाः पतन्ति, पवनप्रकम्पित-पादपादेः पत्र-पुष्प-फलादीनि सचित्तरजः-सलिलादयो व्योमवर्तिविहङ्गमपुरीष-वात्याहतपांशुप्रकरादयश्च निपतन्ति ततस्तत्संरक्षणार्थं पटलानि ध्रियन्ते, तथा भिक्षां भ्रमतः साधोः कदाचिद्वेदोदयोऽपि सम्भवति ततस्तैर्विकृतलिङ्गस्थगनं क्रियते ॥५०४॥

अथैतेषामेवोत्कृष्ट-मध्यम-जघन्यानां ग्रीष्मादिषु सङ्ख्यामाह—'तिण्णी'त्यादि, ग्रीष्मे उत्कृष्टा अत्यन्तशोभनानि त्रीणि पटलानि भवन्ति, कालस्यात्यन्तरूक्षत्वात् सत्वरं सचित्तपृथ्वीरजःप्रभृतीनां परिण-तेस्तेन पटलभेदायोगात् , मध्यमानि—न शोभनानि नाप्यशोभनानि चत्वारि, तेषां प्रभूततराणामेव स्वकार्यसाधनात् , जघन्यानि—जीर्णप्रायाणि अत्यन्तमशोभनानि पञ्चैव । तथा हेमन्ते उत्कृष्टानि चत्वारि, कालस्य स्निग्धत्वाद्विमर्दैन पृथ्वीरजःप्रभृतीनां परिणतेस्तेन पटलभेदसम्भवात् , [2]मध्यमानि पञ्च, जघन्यानि तु षडेव । तथा वर्षासूत्कृष्टानि पञ्च, कालस्यात्यन्तस्निग्धत्वादतिचिरेण पृथ्वीरजः प्रभृतीनां परिणतेस्तेन पटलभेदयोगात् , मध्यमानि षड् , जघन्यानि तु सप्तैव पटलानि भवन्तीति, तानि च पटलानि तथा घनमसृणरूपाणि कर्तव्यानि यथा तैस्तिरोहितः सविताऽपि न दृश्यते, प्राकृतत्वाच्च पुंस्त्वमिति ॥५०५॥

---

१ तुलना-''पुप्फफलोदय-रय-रेणु-सउणपरिहारपायरक्खट्ठा। लिंगस्स य संवरणे वेदोदयरक्खणे पडला ॥'' इति । (ओघनि. गाथा ७०२)। पञ्चवस्तु (८०७) ॥ २ मध्यमानि तु पञ्च- सं. ॥

इदानीं रजस्त्राणप्रमाणमाह– 'माण'मित्यादि, 'मानं तु' प्रमाणं 'रजस्त्राणे' रजस्त्राणविषयं भाजनप्रमाणेन–पात्रकप्रमाणेन भवति निष्पन्नम्, तच्चैवं वेदितव्यमित्याह–प्रादक्षिण्यं–वेष्ठनं कुर्वन् पात्रस्य मध्ये चतुरङ्गुलमिति–चत्वार्यङ्गुलानि यावत्क्रमते[1]–अधिकं तिष्ठति, एतदुक्तं भवति–पात्रकानुरूपं रजस्त्राणं कर्तव्यम्, किं बहुना ?, तिर्यक् पदक्षिणाक्रमेण भाजने वेष्ट्यमाने भाजनस्य मध्यभागो यथा चतुर्भिरङ्गुलैः रजस्त्राणेनातिक्रम्यते तथा रजस्त्राणं विधेयं–कार्यम्, प्रयोजनं चास्य मूषकभक्षण-रेणूत्कर-वर्षोदका-ऽवश्यायसचित्तपृथिवीकायादिसंरक्षणम्, उक्तं च—"[2]मूसग-रय-उक्केरे [3]वासासिण्हारए य रक्खट्ठा। होंति गुणा रयत्ताणे एवं भणियं जिणिंदेहिं ॥१॥" [पञ्चवस्तु ८०९] ॥५०६॥

इदानीं [4]कल्पप्रमाणमाह–'कप्पे'त्यादि, 'कल्पा आत्मप्रमाणाः–सार्धहस्तत्रयप्रमाणा दैर्घ्यतः सार्ध-

---

१ क्रमति–मु० । क्रमोऽनुपसर्गात्(सिद्धहे० ३-३-४७) .. क्रमते, क्रामति । इति तत्रैव लघुवृत्तिः ॥

२ "मूसग-रय-उक्केरे वासे सिण्हा रए अ रक्खट्ठा। होंति गुणा रयताणे एवं भणिआ जिणिंदेहिं ॥ पञ्चवस्तु ८०९ ॥ 'मूषक-रज-उत्कर' इति षष्ठ्यर्थे सप्तमी, मूषक-रज-उत्करस्य ग्रीष्मादिषु वर्षायां 'सिण्हायाः' अवश्यायस्य रजसश्च रक्षार्थं ध्रियमाणे भवन्ति 'गुणा' चारित्रवृद्ध्यादयो रजस्त्राणे, एवं भणितं जिनेन्द्रैरिति गाथार्थः ।" इति तत्रैव टीकायाम् पृ. १२५ ॥

३ वासिण्हारएसयरक्खट्ठा-सं. ॥

४ तुलना-"कप्पा आयपमाणा, अड्ढाइज्जा उ वित्थडा हत्था। एयं मज्झिम माणं, उक्कोसं होंति चत्तारि। बृ.क.भा. ॥३९६६॥ कल्पाः 'आत्मप्रमाणाः' सार्धहस्तत्रयप्रमाणायामाः, अर्धतृतीयांश्च हस्तान् 'विस्तृताः' पृथुला विधेयाः, एतद् मध्यमं 'मानं' प्रमाणं भवति। उत्कर्षतो दैर्घ्येण चत्वारो हस्ताः। एतदादेशद्वयं मन्तव्यम् ॥बृ. क. भा ३९६९॥ अत्रैव कारणमाह–

हस्तद्वयप्रमाणाश्च विस्तरतो विधेयाः, तेषां च मध्ये द्वौ 'सौत्रिकौ' सूत्रनिष्पन्नौ प्रच्छादनपटीरूपौ तृतीयः पुनः 'और्णिकः'–ऊर्णानिष्पन्नः कम्बल इत्यर्थः ॥५०७॥

इदानीं रजोहरणमानमाह–'बत्ती'त्यादि, [1]द्वात्रिंशदङ्गुलानि दीर्घं तावद्रजोहरणं सामान्येन कार्यम्, तत्र च चतुर्विंशतिरङ्गुलानि दण्डः 'से' तस्य करणीयः, अष्टाङ्गुलाश्च दसिकाः कार्याः, अथवा एकतरत् हीनमधिकं वा कार्यम्, कोऽर्थः ?–दण्डो वा हीनो दसिका अधिकमानाः, दण्डोऽधिकप्रमाणो दसिका

---

संकुचिय तरुण आयप्पमाण सुयणे न सीयसंफासो। दुहओ पेल्लण थेरे, अणुचिय पाणाइरक्खाऽऽया ॥३९७०॥ यो भिक्षुस्तरुणो बलवान् स सङ्कुचितपादः स्वप्तुं शक्नोति, तस्य तथा स्वप्ने शीतस्पर्शो न भवति, अतस्तस्य आत्मप्रमाणाः कल्पा अनुज्ञाताः। यस्तु स्थविरो वयसा वृद्धः स क्षीणबलत्वान्न शक्नोति सङ्कुचितपादः शयितुम्, अतस्तस्यानुग्रहार्थं दैर्घ्येणात्मप्रमाणादूर्ध्वं षडङ्गुलानि विस्तरतोऽध्यर्धतृतीयहस्तप्रमाणादभ्यधिकानि षडङ्गुलानि विधीयन्ते। एवं विधीयमाने गुणमुपदर्शयति-"दुहओ पेल्लण" त्ति शिरःपादान्तलक्षणयोर्द्वयोरपि पार्श्वयोर्यत् कल्पस्य 'प्रेरणम्' आक्रमणं तेन स्थविरस्य शीतं न भवति। 'अनुचितः' अभावितः शैक्ष इत्यर्थः, तस्याऽपि स्वपनविधावनभिज्ञस्य कल्पप्रमाणमेवमेव ज्ञातव्यम्। अपि च एवं प्राणिनां रक्षा कृता भवति, न मण्डूकप्लुत्या कीटिकादयः प्राणिन प्रविशन्तीति भावः, आदिशब्दाद् दीर्घजातीयादयोऽपि न प्रविशन्ति, तेनात्मनोऽपि रक्षा कृता भवति॥३९७०॥" इति बृहत्कल्पटीका पृ.१०८९॥ द्रष्टव्ये निशीथभाष्य (५७९४-५) चूर्णी (भा.४. पृ. १३१)॥

१ तुलना-"रयहरणं गणणप्पमाणेण एगं गच्छनिग्गयाणं, गच्छवासीणं दो वासासु।पमाणप्पमाणेण समं दसियासु बत्तीसं अंगुलाइं–जस्स चउव्वीसं अंगुलाइं दंडो तस्स अट्ठ अंगुलाइं दसियाओ जस्स पुण वीसं अंगुलाइं दंडो तस्स बारसंगुला दसियाओ।" इति विशेषचूर्णौ। इति बृहत्कल्प० टिप्पनम् ३ (पृ. १०१०)॥

हीनप्रमाणाः, सर्वथा समुदायतस्तद् द्वात्रिंशदङ्गुलं कर्तव्यमिति ।

❀ यच्चाधुनातनाः साधुमान्याः केचिदेवमाचक्षते—रजोहरणं मध्यभागे पाशकत्रययुक्तं भवतु ❂ 'मज्झे तिपासियं कुज्ज' त्ति सिद्धान्तवचनात् अधस्तनदवरकं तु ये बध्नन्ति रजोहरणे ते मिथ्यादृशः साधवो भगवदाज्ञाभङ्गकारित्वादिति, तान् प्रतीदमभिधीयते-गीतार्थैः रजोहरणे अधस्तनदवरकबन्धस्याऽऽचरितत्वात् मिथ्यादृष्टिता न तद्बन्धकसाधूनाम् , न चाशठपञ्चगीतार्थाचरितं कुर्वतां भगवदाज्ञाभङ्गोऽपि कश्चन, "[1]असढेहिं समाइन्नं जं कत्थइ केणई असावज्जं । न निवारियमन्नेहि य तं बहुगुणमेवमायरियं" ॥१॥ इति गणधरैरेवाभिहितत्वात् , अपरं च—एवं व्याकुर्वतां गीतार्थाचरितं च न्यक्कुर्वतां तेषामेव मिथ्यादृष्टिताप्रसक्तिः, [2]यतस्तेऽपि पृच्छयन्ते अहो सिद्धान्तोक्तकारकंमन्या ! भवद्भिः सिद्धान्तोक्तादधिकं किमपि न विधीयते ? , तत आस्तां तावदन्यत् रजोहरणमपि-[3]"घणं मूले थिरं मज्झे, अग्गे

❀ ❀ चिह्नद्वयमध्यवर्ती [बहुतरदोषसम्भव इति पर्यन्तः] पाठः जे. पो. प्रत्योः नास्ति ॥ ❂ मध्ये त्रिपाशितं कुर्यात् ॥

१ तुलना-"असढेण समाइण्णं, जं कत्थइ कारणे असावज्जं ॥ ण णिवारियमण्णेहिं य, बहुमणुमयमेतमाइण्णं ॥ बृ.क.भा. ॥४४९९॥ 'अशठेन' राग-द्वेषरहितेन कालिकाचार्यादिवत् प्रमाणस्थेन सता 'समाचीर्णम्' आचरितं यद् भाद्रपदशुद्धचतुर्थीपर्युषणापर्ववत् 'कुत्रचिद्, द्रव्य-क्षेत्र-कालादौ 'कारणे' पुष्टालम्बने 'असावद्य' प्रकृत्या मूलोत्तरगुणाराधनाया अबाधकम्, 'न च' नैव निवारितम् 'अन्यैः' तथाविधैरेव' तत्कालवर्तिभिर्गीतार्थैः, अपि तु बहु यथा भवति एवमनुमतमेतदाचीर्णमुच्यते ॥४४९९॥" इति बृहत्कल्पटीका पृ. १२१४ ॥

२ यतस्तेऽपि अहो- मु. ॥ ३ अस्य क्षेमकीर्तिसूरिकृता व्याख्या-" 'मूले' हस्तग्रहणप्रदेशे रजोहरणं 'घनं' निबिडवेष्टितम् , 'मध्ये' मध्यभागे 'स्थिरं' दृढम्; 'अग्रे' दशिकापर्यन्ते 'मार्दवयुक्तता' दशिका मृदुस्पर्शा विधेया

मद्दव [1]जुत्तयं । एगंगियं अझुसिरं, पोरायामं तिपासियं ॥१॥ अप्पोल्लं [2]मिउ पम्हं, पडिपुण्णं हत्थपूरिमं । रयणीपमाणमित्तं, कुज्जा पोरपरिग्गहं' [ बृ.क.भा. ३९७७-३९७९ ] ॥२॥ इत्यागमानभिहितं कुर्वतां भवतामपि भगवदाज्ञाभङ्गकारित्वेन मिथ्यादृष्टित्वं प्राप्तम्, ततो भवद्भिरपि गीतार्थाचरितमवश्यं शरणीकर्त्तव्यं अन्यथा तु बहुतरदोषसंभव इति * ॥५०८॥

मुखवस्त्रिकामानमिदानीमाह–'चउ'इत्यादि, चत्वार्यङ्गुलानि एका च वितस्तिरेतच्चतुरस्रस्य मुखानन्तकस्य–मुखवस्त्रिकायाः प्रमाणम् । अथवा द्वितीय आदेशो–मतान्तरं मुखप्रमाणेन निष्पन्नं [3]मुखानन्तकम्, एतदुक्तं भवति–वसतिं प्रमार्जयतः साधोर्नासिकामुखयो रजःप्रवेशरक्षणार्थम्, उच्चारभूमौ नाशिकाशोर्दोषपरिहारार्थं च यावता मुखं प्रच्छाद्यते, त्र्यस्रं कोणद्वये गृहीत्वा पृष्ठतश्च ककाटिकायां यावता ग्रन्थिर्दातुं शक्यते तावत्प्रमाणा मुखवस्त्रिका करणीयेति ॥५०९॥

---

इत्यर्थः। "एकाङ्गिकं नाम' तज्जातदशिकं न वा द्व्यादिखण्डनिष्पन्नम् 'अशुषिरं' न रोमबहुलं न वा ग्रन्थिलम्, 'पोरायामं' ति पर्वायामम् अङ्गुष्ठपर्वणि प्रतिष्ठितायाः प्रदेशिन्या यावदपान्तरालं तावत्प्रमाणायामम्, "तिपासिय" ति त्रिभिर्दवरकवेष्टकैः पाशित–बद्धम्, एवंविध रजोहरण कर्त्तव्यम् ॥३९७७॥ ......... 'अप्पोल्लं' दृढवेष्टनादशुषिरमशुषिरदण्डं वा, तथा मृदूनि-कोमलानि पक्ष्माणि दशिका रोमाग्रभागरूपाणि यस्य तद् मृदुपक्ष्मकम्, 'प्रतिपूर्णं' बाह्ये न निषद्याद्वयेन युक्त सद् 'हस्तपूरिमं' यथा हस्तं पूरयति तथा कर्त्तव्यमित्यर्थः, ..... रत्निप्रमाणमात्रं हस्तप्रमाणायामदण्डकं 'पर्वपरिग्रहम्' अङ्गुष्ठपर्वलग्नप्रदेशिनीशुषिरपूरकम्, एवंविधं रजोहरण कुर्यात् ॥३९७९॥ . "इति बृ.क. टीका पृ.१०९१॥ निशीथभाष्यम्(५८००-५८०२) निशीथचूर्णिश्च भा. ४। पृ १४० द्रष्टव्या ॥

१ जुत्तया इति बृ.क.पाठः गाथा ३९७७॥ २ मिउपम्हं च पडिपुन्नं-इति बृ.क.पाठः गाथा३९७८॥ ३ मुखानन्तकं वसतिं-जे.॥

इदानीं [1]मात्रकप्रमाणमाह–'जो' इत्यादि, यो 'मागधो' मगधदेशोद्भवः प्रस्थः–

^'दो असईओपसई दो पसईओ य सेइया होइ। चउसेइयाहिं कुलओ चउकुलओ मागहो पत्थो' ॥१॥

इति क्रमनिष्पन्नः तन्मानात्सविशेषतरम्–अधिकतरं मात्रकप्रमाणं भवति, तेन च किं प्रयोजनमित्याह–

---

१ तुलना-"जो मागहओ पत्थो सविसेसतरं तु मत्तगपमाणं। दोसुवि दव्वगहण, वासावासासु अहिकारो ॥४०६७॥ यो 'मागधः' मगधदेशोद्भवः 'प्रस्थः' "दो असईओ पसई, दो पसईओ य सेइया होति। चउसेइयाहि पत्थो" इति क्रमनिष्पन्नः ततो मागधप्रस्थात् सविशेषतरं मात्रकप्रमाणं भवति। तेन च मात्रकेण 'द्वयोरपि' ऋतुबद्ध-वर्षावासयोर्गुरु-ग्लानादियोग्यस्य भक्त–पानद्रव्यस्य ग्रहणं क्रियते। अन्ये तु व्याचक्षते-"दोसु वि" त्ति प्रतिग्रहे भक्तं मात्रके पानकं गृह्यते। वर्षावासे तु विशेषतो मात्रकेणाधिकारः, यतो वर्षासु प्रथममेव यत्र धर्मलाभयति तत्र पानकं गृह्णाति, यतः कदाचिद् व्याघारितं वर्षं निपतेद् येन गृहाद् गृहं सञ्चरितुं न शक्येत ततः पानकेन विना प्रतिग्रहो लेपकृतो भवति। अथवा वर्षावासे भक्त-पानं संसज्यत इति कृत्वा मात्रकेण तस्य शोधनं कार्यम् ॥४०६७॥ प्रकारान्तरेण मात्रकप्रमाणमाह—

सुक्खोल्लओयणस्सा, दुगाउतद्धाणमागओ साहू भुंजति एगट्ठाणे, एतं खलु मत्तगपमाणं ॥४०६८॥ शुष्कौदन-स्यान्यभाजनगृहीतेन तीमनेनार्द्रस्य भृतं यद् 'एकस्थाने' एकवारं द्विगव्यूतमात्रादध्वन आगतः साधुर्भुङ्क्ते एतत् खलु मात्रकप्रमाणं मन्तव्यम् ॥४०६८॥ यदि वा—

मत्तस्स व पाणस्स व, एगतरागस्स जो भवे भरिओ। पज्जत्तो साहुस्स उ, बितियं पि य मत्तयपमाणं ॥४०६९॥ भक्तस्य वा पानकस्य वाऽनयोरेकतरस्य यद् भृतं सद् एकस्य साधोः पर्याप्तं भवति एतद् द्वितीयमपि मात्रकप्रमाण-मवगन्तव्यम् ॥४०६९॥" इति बृ. क. भा. टीका पृ. ११११ ॥

△द्वे असती प्रसृतिः द्वे प्रसृती सेतिका भवति चतसृभिः सेतिकाभिः कुलवः चतष्कुलवो मागधः प्रस्थः ॥१॥

द्वयोरपि—वर्षावर्षयोः—वर्षाकाल-ऋतुबद्धकालयोगु[1]र्वादिप्रायोग्यद्रव्यग्रहणं क्रियते, अयमधिकारः इदं मात्रकस्य 'प्रयोजनम्, एतदुक्तं भवति—यदि तत्र क्षेत्रे गुरु-ग्लान-प्राघूर्णकादिप्रायोग्यद्रव्यस्यावश्यंभावी लाभः तदा वैयावृत्त्यकरसङ्घाटक एव मात्रके तत्प्रायोग्यं द्रव्यं गृह्णाति, असति च प्रायोग्यद्रव्यस्य ध्रुवलाभे सर्व एव सङ्घाटका मात्रकेषु गुर्वादिप्रायोग्यं द्रव्यं गृह्णन्ति, यतो न ज्ञायते कः किं लप्स्यते आहोश्विन्नेति, [2]तथा यत्र क्षेत्रे काले वा स्वभावेनैव भक्तपानं संसज्यते तत्र प्रथमं मात्रके तद् गृह्यते, ततः शोधयित्वा भक्तपानमितरेषु पतद्ग्रहेषु प्रक्षिप्यते, तथा दुर्लभघृतादिद्रव्यग्रहणं सहसादानग्रहणं च तेन क्रियते, इत्यादि मात्रकस्य प्रयोजनमिति ॥ ५१० ॥

अपरं च मात्रकस्य प्रमाणमाह—'सूवोयणस्से' इत्यादि, अत्र प्राकृतत्वेन विभक्तिव्यत्ययात्सूपोदनेन—दाली-कूरेण भृतं यदेकं स्थानं—भाजनरूपं द्विगव्यूतादध्वन आगतः साधुर्भुङ्क्ते तदेतत्किल मात्रकस्य द्वितीयं प्रमाणम्, मूलनगरादुपनगरगोकुलादिषु द्विगव्यूतस्थितेषु भिक्षामटित्वा समागत्य वसतौ मात्रके सर्वं प्रक्षिप्य तदानीमेतावता श्रमेण एकस्थानस्थितस्तत्सूपादिकं भुङ्क्ते यदि च यावन्मात्रं सूपादिकं साधुर्भोक्तुं शक्नोति तावन्मात्रमेव तत्र मात्रके माति न न्यूनमधिकं वा तदा तत्प्रमाणं मात्रकस्येति तात्पर्यम् ॥५११॥

१ तुलना—'आयरिए य गिलाणे पाहुणए दुल्लभे सहसदाणे। संसत्तभत्तपाणे मत्तगपरिभोगो अणुन्नाओ ॥ एक्कंमि उ पाउग्गं गुरुणो बितिओग्गहे य पडिकुट्ठं। गिण्हइ संघाडेगो धुवलंभे सेस उभयंपि ॥ असई लाभे पुण मत्तए य सव्वे गुरूण गेण्हंति। एसेव कमो नियमा गिलाणसेहाइएसुं पि'। इति ओघनि.७१६-७१८ ॥

२ यथा यत्र क्षत्र—जे.। तथा यत्र यत्र क्षेत्रे—मु.।

इदानीं चोलपट्टमानमाह–' 'दुगुणो' इत्यादि, द्विगुणश्चतुर्गुणो वा कृतः सन् यथा हस्तप्रमाण-श्चतुरस्रश्च भवति तथा चोलस्य–पुरुषचिह्नस्य पट्टः–प्रावरणवस्त्रं चोलपट्टः कार्यः, किमर्थं द्विगुणश्चतुर्गुणो वेत्याह–'थेरजुवाणाणट्ठ' त्ति क्रमेण स्थविराणां यूनां च साधूनामर्थाय–प्रयोजनाय, स्थविराणां द्विहस्तः, तदिन्द्रियस्य प्रबलसामर्थ्याभावादल्पेनाप्यावरणात्, यूनां च चतुर्हस्तश्चोलपट्टकः करणीय इति भावः, 'सण्हे थुल्लंमि य विभास' त्ति श्लक्ष्णे स्थूले च चोलपट्टे 'विभाषा' विविधा भाषा, अयं भेदो–यदुत स्थविराणां श्लक्ष्णः करणीयस्तदिन्द्रियस्पर्शेन चोलपट्टस्योपघाताभावात्, यूनां तु स्थुल इति ॥५१२॥

इदानीं पूर्वमनुद्दिष्टयोरप्युपकरणप्रस्तावादौपग्रहिकोपधिरूपयोः संस्तारकोत्तर[2]पट्टयोर्मानमाह–'संथारुत्तारे'त्यादि, संस्तारक उत्तरपट्टश्चेति द्वयमपि प्रत्येकमर्धतृतीयौ हस्तौ आयतं भवति, [3]द्वयोरपि च संस्तारकोत्तरपट्टयोर्विस्तारः–पृथुत्वमेको हस्तश्चतुरङ्गुलं–चत्वार्यङ्गुलानि, [4]प्रयोजनं च संस्तारकस्य प्राणि-रेणुसंरक्षणम्, तदभावे हि शुद्धभूमौ शयानस्य साधोः पृथिव्यादीनां प्राणिनामुपमर्दो भवति रेणुश्च शरीरे लगति, तथा उत्तरपट्टोऽपि क्षौमिकः षट्पदिकासंरक्षणार्थं संस्तारकस्योपरि आस्तीर्यते, अन्यथा कम्बलमयसंस्तारक-शरीरयोः संघर्षेण षट्पदिकाविराधना स्यादिति ॥ ५१३ ॥

अथ सुत्रकृदेव केषाञ्चिदुपकरणानां प्रयोजनं प्रतिपिपादयिषुः पूर्वं तावद्रजोहरणस्य प्रयोजनमाह–

१ दिगुणो–मु. ॥ २ ०पट्टरूपयोर्मान० मु. ॥ ३ द्वयोरपि संस्ता० मु. ॥
४ तुलना-"पाणादिरेणुसारक्खणट्ठया होंति पट्टगा चउरो । छप्पइयरक्खणट्ठा तत्थुवरिं खोमियं कुज्जा" ॥इति ओघनिर्युक्तिः (गा. ७२४) । तुलना-धर्मसङ्ग्रहटीका (भा. २ । पृ. ६८) ॥

[1]'आयाणे'त्यादि, आदाने-ग्रहणे निक्षेपे-मोचने स्थाने-ऊर्ध्वस्थाने निषदने-उपवेशने त्वग्वर्तने-शयने सङ्कोचने च-पादादीनां पश्चात्करणे सम्पातिमादिसूक्ष्मजीवसंरक्षणाय पूर्वम्-आदौ भूम्यादेः प्रमार्जनार्थं रजोहरणं तीर्थकरैः कथितम् , पूर्वमप्रमार्जिते हि पात्रादौ तदादाने क्रियमाणेऽवश्यं मशक-कुंथ्वादीनामुपघातो भवति, रजोहरणेन तु प्रमार्जने कृते तेषां रक्षा कृता भवति, तथाऽर्हद्दीक्षायां लिङ्ग-चिह्नमेतत् प्रथममिति॥ ५१४ ॥

अथ मुखवस्त्रिकायाः प्रयोजनमाह-'संपे'त्यादि, सम्पातिमा जीवा मक्षिका-मशकादयस्तेषां रक्षणार्थं भाषमाणैर्मुखे मुखवस्त्रिका दीयते, तथा रजः-सचित्तः पृथिवीकायस्तत्प्रमार्जनार्थं रेणुप्रमार्जनार्थं च मुखपोत्तिकां वदन्ति-प्रतिपादयन्ति तीर्थकरादयः, तथा वसतिं प्रमार्जयन् साधुर्नासां मुखं च बध्नाति-आच्छादयति 'तया' मुखपोतिकया यथा मुखादौ रेणुर्नप्रविशतीति ॥ ५१५ ॥

इदानीं पात्रग्रहणस्य प्रयोजनमाह-'छक्काये'त्यादि, षट्कायरक्षणार्थं पात्रग्रहणं जिनैः प्रज्ञप्तम् , पात्रकरहितो हि साधुर्भोजनार्थी षडपि जीवनिकायान् [2]परिशाटनादिदोषेण विनाशयतीति, ये [3]च गुणाः-गुरु-ग्लान-वृद्ध बाल-भिक्षाभ्रमणासहिष्णुराजपुत्र-प्राघूर्णका ऽलब्धिमत्साध्वादेर्भिक्षादानादयः सम्भोगे-एकमण्डलीरूपे व्यावर्णिताः सिद्धान्ते त एव गुणाः पात्रग्रहणेऽपि भवन्ति, पात्रग्रहणमन्तरेण कथमेतन्निमित्तं भिक्षा समानीयत इति भावः ॥ ५१६ ॥



---

१ 'आये' त्यादि-मु । आयाणे गाहा-सं. ॥ २ परिशातनादि० पञ्चवस्तुकटीका ८१० ॥
३ तुलना-"भतरत बाल-वुड्ढा सेहाऽऽएसा गुरू असहुवग्गे । साहारणोग्गहालद्धिकारणा पादगहणं तु" इति ओघनि० ६९२, पंचवस्तुकः ८११ ॥

इदानीं कल्पानां प्रयोजनमाह–'तणगहणे'त्यादि, तृणानां–व्रीहि-पलालादीनां ग्रहणं तृणग्रहणम् , अनलः–अग्निस्तस्य सेवा, तयोर्निवारणार्थं कल्पग्रहणम् , असति कल्पे शीतादौ सति गाढे पलाला-ऽग्नि-सेवामवश्यं करोति तत्करणे च जीववधः, तथा धर्म-शुक्लध्याननिमित्तं दृष्टम्–अनुज्ञातं कल्पग्रहणं तीर्थकृद्भिः, शीताद्युपद्रवे हि कल्पप्रावृत्तः सुखेन धर्म-शुक्लध्याने [1]अध्यामे करोतीति, अन्यथा शीतादौ कम्पमानकायो दन्तवीणामनवरतं वादयन् कथङ्कारं ते ध्याने विधास्यतीति?, तथा ग्लानसंरक्षणार्थं दृष्टं कल्पग्रहणम् , अन्यथा शीतवातादिना बाध्यमानो ग्लानो गाढतरं ग्लानो भवति, तथा मरणार्थं कल्पग्रहणम् , मृतस्य ह्युपरि प्रच्छादनार्थं कल्पः क्रियते, इतरथा लोकव्यवहारादिबाधा कृता भवति ॥ ५१७ ॥

इदानीं चोलपट्टस्य प्रयोजनमाह–'वेउव्वे' त्यादि, यस्य साधोः प्रजननं–साधनं [2]वैक्रियं–विकृतं भवति, यथा दाक्षिणात्यपुरुषाणामग्रभागे विध्यते प्रजननम् , तच्च तथाविधं दृष्टं विकृतं भवति ततस्तत्प्रच्छादनार्थं चोलपट्टकोऽनुजज्ञे, 'अवाउडे'त्ति पदं सर्वत्र सम्बध्यते, ततोऽप्रावृते–अपरिहिते चोलपट्टके एते दोषा भवन्ति, यथा–कश्चित्साधुरप्रावृतसाधनो भवति, अग्रभागे चर्मणा अनाच्छादितलिङ्गो दुश्चर्मा इत्यर्थः, ततस्तदनुग्रहार्थं चोलपट्टोऽनुज्ञातः, तथा कश्चित् साधुर्वातिको भवति–वातेन च तदीयसाधनमुच्छूनं भवति, ततस्तदनुग्रहाय चोलपट्टोऽनुमतः, तथा प्रकृत्यैव कश्चित् ह्रीमान्–लज्जालुर्भवति ततस्तत्प्रावरणाय चोलपट्टः, तथा स्वभावेनैव कश्चित् 'खद्धपजणण' त्ति बृहत्साधनो भवति लोकश्च तथाविधं तं दृष्ट्वा हसति, ततस्तथाविधानुग्रहाय चोलपट्टः, तथा लिङ्गोदयार्थं चोलपट्टः कदाचिन्मनोहर-

१ अध्मामे-स० ॥ २ तुलना-बृहत्कल्पटीका पृ० ७३०, पं २० तः ॥

रूपामनुपमयौवनां वनितां विलोक्य लिङ्गस्योदयो भवति अथवा तदीयं लिङ्गं मनोरमं चोलपट्टानाच्छादितं दृष्ट्वा स्त्रिया एव लिङ्गोदयो भवति ततस्तत्प्रच्छादनाय पट्टः—चोलपट्टोऽनुज्ञात इति ॥ ५१८ ॥

इदानीमिहैव द्वारे उपकरणादिव्यवस्थार्थं साधुभेदानाह—

[1]अवरेवि सयंबुद्धा हवंति पत्तेयबुद्धमुणिणोऽवि ।
पढमा दुविहा एगे तित्थयरा तदियरा अवरे ॥५१९॥
तित्थयरवज्जियाणं बोही उवही सुयं च लिंगं च ।
नेयाइं तेसि बोही जाइस्सरणाइणा होइ ॥ ५२० ॥
मुहपत्ती रयहरणं कप्पतिगं सत्त पायनिज्जोगो ।
इय बारसहा उवही होइ सयंबुद्धसाहूणं ॥५२१॥
हवइ इमेसि मुणीणं पुव्वाहीयं सुअं अहव नत्थि ।
जइ होइ देवया से लिंगं अप्पइ अहव गुरुणो ॥५२२॥
जइ एगागीविहु विहरणक्खमो तारिसी व से इच्छा ।
तो कुणइ तमन्नहा गच्छवासमणुसरइ निअमेणं ॥५२३॥
पत्तेयबुद्धसाहूण होइ वसहाइदंसणे बोही ।
पोत्तिय-रयहरणेहिं तेसि जहण्णो दुहा उवही ॥५२४॥



१ तुलना- धर्मसङ्ग्रहः टीका भा. २/पृ ६८A ॥

मुहपोत्ती रयहरणं तह सत्त य पत्तयाइनिज्जोगो ।
उक्कोसोऽवि नवविहो सुयं पुणो पुव्वभवपढियं ॥५२५॥
एक्कारस अंगाइं जहन्नओ होइ तं तदुक्कोसं ।
देसेण असंपुन्नाइं हुंति पुव्वाइं दस तस्स ॥५२६॥
लिंगं तु देवया देइ होइ कइयावि लिंगरहिओवि ।
एगागी च्चिय विहरइ नागच्छइ गच्छवासे सो ॥५२७॥

'अवरेऽवी' [1]त्यादिगाथानवकम्, 'अपरेऽपि' जिनकल्पिक-स्थविरकल्पिकेभ्यः पूर्वभणितेभ्योऽन्येऽपि मुनयो भवन्ति [2]स्वयम्बुद्धाः प्रत्येकबुद्धाश्च, अपिश्चार्थे, तत्र प्रथमाः—स्वयम्बुद्धा द्विविधाः—

१ त्यादि अपरे-सं. ॥ २ तुलना "सयबुद्धकेवलनाणं जं सयं चेव संबुज्झिऊणं किंचि आयरियं उवसंपज्जति, ततो पच्छा जं तस्स केवलणाणं तं सयंबुद्धकेवलणाणं भण्णति। पत्तेयबुद्धकेवलणाणं णाम जहा णमिस्स रायरिसिणो, ते य पत्तेयबुद्धा सयं चेव सबुज्झिऊण सयं चेव पव्वज्जं अब्भुवगच्छंति तेसिं जं केवलणाणं तं पत्तेयबुद्धकेवलणाणं भन्नति; अथवा सयं अप्पणिज्जं जातिसरणादिकारणं पडुच्च बुद्धा सयंबुद्धा, फुडतरं वा अभिधीयते, बाह्यप्रत्ययमन्तरेण ये प्रतिबुद्धास्ते सयंबुद्धाः, ते य दुविहा तित्थगरा वइरित्ता य, इह वतिरित्तेहिं अहिगारो, किंच सयंबुद्धस्स बारसविहोऽवि उवही भवति, पुव्वाधीत से सुतं भवति वा ण वा, जति से णत्थि तो लिंगं नियमा गुरुसंनिहे पडिवज्जति गच्छे य विहरति, अहवा पुव्वाधीतसुयसंभवो अत्थि तो से लिंगं देवता पयच्छति गुरसंनिहे वा पडिवज्जति जदि य एगविहारविहरणजोग्गो इच्छा य से तो एगो चेव विहरति, अन्नहा गच्छे विहरति, एयम्मि भावे ठिता सिद्धा, पती पती (पत्तेयत्ता) ओ वा भावतो सिद्धा पत्तेयबुद्ध० पत्तेयं बाह्यं वसभादि-

एके तीर्थकरास्तदितरे—तीर्थकरव्यतिरिक्ताः, 'अपरे' द्वितीयाः, इह च तीर्थकरव्यतिरिक्तैरधिकारः, तत्र स्वयम्बुद्ध-प्रत्येकबुद्धानां बोध्युपधि-श्रुत-लिङ्गकृतो विशेषः ॥५१९॥

तत्र स्वयम्बुद्धानां बोध्यादीन्याह—'तित्थे' त्यादि गाथाचतुष्टयम् , तीर्थकरवर्जितानां स्वयम्बुद्धानां बोधिः—धर्मप्राप्तिः, उपधिः—उपकरणानि, श्रुतं—ज्ञानम् , लिङ्गं चेति ज्ञेयानि प्रत्येकबुद्धेभ्यो भेदप्रतिपादकानि चत्वारि स्थानानि, तान्येव क्रमेणाह—तेषां बोधिर्बाह्यप्रत्ययमन्तरेणैव निजजातिस्मरणादिना भवति, तथा मुखपोत्तिका रजोहरणं कल्पत्रिकं सप्तविधश्च पात्रनिर्योग इति द्वादशधा उपधिर्भवति स्वयम्बुद्धसाधूनाम् , तथा एषां स्वयम्बुद्धसाधूनां पूर्वजन्मन्यधीतं—पठितं श्रुतं भवति अथवा नैव भवति पूर्वाधीतं श्रुतं किन्तु नवतरपठितमेव, ततो यदि पूर्वाधीतं श्रुतं तेषामुपतिष्ठते तदा 'से' त्ति तस्य स्वयम्बुद्धस्य देवता 'लिङ्गं' रजोहरणादिकमर्पयति,उपलक्षणमेतत् ,गुरुसन्निधौ वा गत्वा लिङ्गं प्रतिपद्यते,अथ न पूर्वाधीतं श्रुतमुपतिष्ठते तदा गुरव एव लिङ्गमर्पयन्ति,अयं च यद्येकाक्यपि विहरणक्षमो-विहारं कर्तुं समर्थस्तादृशी वा तस्य इच्छा—एकाकिविहारकरणेऽभिलाषस्ततः करोति तम्—एकाकिविहारम्, 'अन्यथा' एकाकिविहाराक्षमतायामिच्छाया अभावे

---

कारणमभिवीक्ष्य बुद्धा पत्तेयबुद्धा, एतेसिं णियमा पत्तेयं विहारो जम्हा तम्हा ते पत्तेयबुद्धा, जहा करकंडुमादयो, किंच पत्तेयबुद्धाण जहन्नेण दुविहो, उक्कोसेण णवविहो, उवधी णियमा पाउरणवज्जो भवति किंच पत्तेयबुद्धाणं नियमा पुव्वाधीतं सुतं भवति, जहन्नेण एक्कारसंगी, उक्कोसेण भिन्नदसपुव्वी, लिंगं च देवया पयच्छति, लिंगवज्जितो वा भवति। जतो भणित रुप्पं पत्तेयबुद्धा' [आव. नि.]" इति आवश्यकचूर्णिः पृ. ७५ तः। आव. मलय. टीका अपि पृ. ८४ A तः द्रष्टव्या ॥

च गच्छवासमनुसरति—गच्छ एवास्ते 'नियमेन' निश्चयेन, इदं च पूर्वाधीतश्रुतसद्भाव एव द्रष्टव्यम्, पूर्वाधीतश्रुताभावे तु गच्छवास एवावश्यं व्यवतिष्ठते इति, तथा चोक्तम्—

"पुव्वाहीयं सुयं से हवइ वा न वा, जइ से नत्थि तो लिंगं नियमा गुरुसंनिहे पडिवज्जइ गच्छे य विहरइत्ति, अह पुव्वाहीयसुयमभवो अत्थि तो से लिंगं देवया पयच्छइ, गुरुसन्निहे वा पडिवज्जइ, जइ एगविहारविहरणे समत्थो इच्छा व से तो एक्को चेव विहरइ, अन्नहा गच्छे विहरइत्ति" [तुलना-आव० चूर्णिः पृ.७५] ॥५२०-५२३॥

इदानीं प्रत्येकबुद्धानां बोध्यादीनि चत्वारि स्थानान्याह-'पत्ते' इत्यादिगाथाचतुष्टयम्, प्रत्येकबुद्धसाधूनां बाह्यवृषभादिकारणदर्शने बोधिर्नियमतो भवति, तथा तेषामुपधिर्द्विविधो—जघन्य उत्कृष्टश्च, तत्र जघन्यो मुखपोतिका-रजोहरणाभ्यां द्विधा, उत्कृष्टोऽपि मुखपोतिका-रजोहरण-सप्तविधपात्रनिर्योगरूपो नवविधः,तथा श्रुतं पुनः पूर्वभवपठितमेव तेषां नियमतो भवति, तच्च जघन्यत एकादशाङ्गानि—आचारादीनि, तथोत्कृष्टं श्रुतं देशेन—एकदेशेनोनानि—असम्पूर्णानि भवन्ति पूर्वाणि दश 'तस्य' प्रत्येकबुद्धस्य, लिङ्गं तु—रजोहरणादिकं देवतैव तस्य ददाति कदाचिच्च लिङ्गरहितोऽपि भवति तथा एकाक्येव विहरति वसुन्धरायाम्, न पुनरागच्छति गच्छवासे स इति ॥ ५२४-२७ ॥

इदानीं 'साहुणीणोवगरणाइं' ति द्वाषष्टं द्वारमाह—

उवगरणाइं चउद्दस अचोलपट्टाइं कमढयजुयाइं ।
अज्जाणवि भणियाइं अहियाणिवि हुंति ताणेवं ॥ ५२८ ॥

[1]उग्गहऽणंतग १ पट्टो २ अड्ढोरुय ३ चलणिया ४ य बोद्धव्वा ।
अब्भिंतर ५ बाहिनियंसणी ६ य तह कंचुए ७ चेव ॥ ५२९ ॥
उक्कच्छिय ८ वेगच्छिय ९ संघाडी १० चेव खंधगरणी ११ य ।
ओहोवहिंमि एए अज्जाणं पन्नवीसं तु ॥ ५३० ॥ [तु. ओघनि. ६७६-७]
अह उग्गहणंतगं नावसंठियं गुज्झदेसरक्खट्ठा ।
तं तु पमाणेणेक्कं घणमसिणं देहमासज्ज ॥ ५३१ ॥
पट्टोवि होइ एगो देहपमाणेण सो उ भइयव्वो ।
छायंतोग्गहणंतं कडिबद्धो मल्लकच्छा व ॥ ५३२ ॥
अड्ढोरुगोवि ते दो वि गिण्हिउं छायए कडीभागं ।
जाणुपमाणा चलणी असीविया लंखियाए व ॥ ५३३ ॥
अंतोनियंसणी पुण लीणतरी जाव अद्धजंघाओ ।
बाहिरगा जा खलुगा कडीइ दोरेण पडिबद्धा ॥ ५३४ ॥
छाएइ अणुक्कुइए उरोरुहे कंचुओ असिव्वियओ ।
एमेव य ओकच्छिय सा नवरं दाहिणे पासे ॥ ५३५ ॥



---

१ एतद् गाथादशकं (५२९-५३८ निशीथभाष्ये १३९८-१४०७ क्रमाङ्केन बृहत्कल्प० भाष्ये ४०८२-४०६१ क्रमाङ्केन पञ्चवस्तुके ७८२, ७८३, ८२५ - ८३२ क्रमाङ्केन उपलभ्यते, तत्र स्वल्पपाठभेदो दृश्यते ॥

वेगच्छिया उ पट्टो कंचुगमुक्कच्छिगं च छायंतो ।
संघाडीओ चउरो तत्थ दुहत्था उवसयंमि ॥ ५३६ ॥
दोन्नि तिहत्थायामा भिक्खट्ठा एग एगमुच्चारे ।
ओसरणे चउहत्थाऽनिसण्णपच्छायणा मसिणा ॥ ५३७ ॥
खधगरणी उ चउहत्थवित्थडा वायविहुयरक्खट्ठा ।
खुज्जकरणी उ कीरइ रूववईणं कुडहहेऊ ॥ ५३८ ॥ [तु.–ओघनि. भाष्य ३१३-३२०]

[1]'उवगरणाइं' इत्यादिगाथैकादशकम्, पूर्वोक्तानि 'पत्तं पत्ताबंधो' [गाथा ४९१] इत्यादीनि उपकरणादीनि चतुर्दश अचोलपट्टानि–चोलपट्टकरहितानि [2]कमठकयुतानि आर्यिकाणामपि भणितानि, पात्रादीनां च प्रमाणं गणनया स्वरूपेण च स्थविराणामिव द्रष्टव्यम्, [3]कमठकं च–लेपिततुम्बक-भाजनरूपं कांस्यमयबृहत्तरकरोटिकाकारमेकैकं संयतीनां [4]निजोदरप्रमाणेन विज्ञेयम्, संयतीनां च मण्डलीमध्ये पतद्ग्रहको न भ्रमति ❀ एकस्याः संयत्या अपरस्याः कार्ये न समायाति ❀ तुच्छस्वभावात् किन्तु कमठक एवार्यिका भोजनक्रियां कुर्वन्तीत्यतः कमठकग्रहणम्, 'अहियाणिव होंति ताणेवं' ति अधिकान्यपि–पूर्वोक्तचतुर्दशोपकरण-व्यतिरिक्तान्यप्युपकरणान्यार्यिकाणां भवन्ति, तानि चैवम् ॥५२८॥

१ उवेत्यादि–मु.॥ २ कमढग-मु.॥ ३ कमढकं-मु. ॥
४ तुलना-"कमढगपमाणं उदरप्पमाणओ संजईण विण्णेअं । सङ्गहणं पुण तस्सा लहुसगदोसा इमासिं तु" इति पञ्चवस्तुक' ८२४ ॥ ❀ ❀ चिह्नद्वयमध्यवर्तीपाठः जे. सं. नास्ति ॥

यथा— [1]अवग्रहानन्तकं १ पट्टकः २ अर्धोरुकं ३ चलनिका ४ च बोद्धव्या, अभ्यन्तरनिवसनी ५ बहिर्निवसनी ६ च तथा कञ्चुकश्चैव ७ [2]उपकक्षिका ८ वैकक्षिका ९ सङ्घाटी १० चैव स्कन्धकरणी ११ च एते [3]आर्यिकाणां सम्बन्धिनि ओघोपधौ [4]पञ्चविंशतिर्भेदाः ॥५२९-३०॥

एतान् स्वयमेव व्याचष्टे—'अथे'—त्यानन्तर्ये, [5]अवग्रह इति योनिद्वारस्य सामयिकी संज्ञा, तस्यानन्तकं—वस्त्रम् अवग्रहानन्तकम्, तच्च नौसंस्थानं--वेडिकाकारं मध्यभागे विशालं पर्यंतभागयोस्तु तनुकमित्यर्थः, गुह्यदेशरक्षार्थं—ब्रह्मचर्यसंरक्षणार्थं गृह्यते, तत्पुनर्गणनाप्रमाणेनैकं भवति, तथा आर्तव-



१ इतः आरभ्य तुलना-निशीथचूर्णिः भा. २। पृ. १८९ तः, बृ.क.टी. पृ ११११४ तः, पंचवस्तुकटीका पृ-१२२A,१२८ ॥
२ उत्कक्षिका. पंचवस्तुकटीकाः ७८३। औपकक्षिकी-इति बृ क. टी. ४०८३ ॥ ३ आर्यिका सं० सं. ॥
४ "अयं चार्यिकाणां संबन्धी अवधिस्त्रिप्रकारो भवति एकोऽपि सन् उत्तम-मध्यम-जघन्यभेदेन, तत्र तस्यार्यिकावधिमध्ये उत्कृष्टः प्रधानोऽष्टविधः एतदेवाह—

'उक्कोसो अट्ठविहो मज्झिमओ होइ तेरसविहो उ। जहन्नो चउव्विहोवि य तेण परमुवग्गहं जाण' ॥ओघ. नि ६७८॥ उत्कृष्टोऽष्टविधस्तद्यथा-पात्रकं संघाडीओ चउरो खंधकरणी अंतोनियंसणी बाहिणियंसणी य, अयमष्टविध उत्कृष्टः प्रधानः। पत्ताबंधो पडलाइं रयत्ताण रयहरण मत्तयं उवग्गहणंतय पट्टओ अद्धोरुगं चलणि कंचुगो उक्कच्छिया वेकच्छिया कमढगा अयमार्यिकावधेर्मध्य त्रयोदशभेदो मध्यमोपधिरिति। पायट्ठवणं पायकेसरिया गोच्छओ मुहपत्तिया चेति आर्यिकावधेर्मध्ये जघन्यः-अशोभनश्चतुष्प्रकार इति। अतः परं यः कारणे सति सयमार्थं गृह्यते सोऽवग्रहावधिरित्येवं जानीहि।" इति ओघनिर्युक्तिवृत्तिः पृ. २०६ B ॥
५ तुलना-"यथा चोलस्स पट्टगो चोलपट्टगो एवं उग्गहस्स णंतगो उग्गहणंतगो इति। उग्गह इति जोणिदुवारस्स सामइकी संज्ञा। अहवा उदुयं उगिण्हतीती उग्गहणंतगं।" निशीथचूर्णिः गा० १४०० । भा. २-पृ. १८९ ॥

बीजपातसंरक्षणार्थं घनं—घनवस्त्रेण क्रियते, पुरुषसमानकर्कशस्पर्शपरिहरणार्थं च मसृणं—मसृणवस्त्रेण क्रियते, मसृणे हि वस्त्रे स्त्रीयोनिस्पर्शसदृशः स्पर्शो भवति, सजातीयश्च सजातीये न प्रभवतीति मसृणग्रहणम्, तथा 'देहमाश्रित्य' देहानुमानेन प्रमाणं तस्य करणीयम्, देहो हि कस्याश्चित्तनुः कस्याश्चित्स्थूलः ततस्तदनुसारेण विधेयमित्यर्थः ॥५३१॥

पट्टोऽपि गणनाप्रमाणेन भवत्येकः पर्यन्तभागवर्तिवीटकबन्धः पृथुत्वेन चतुरङ्गुलप्रमाणः समतिरिक्तो वा दैर्घ्येण तु स्त्रीकटीप्रमाणः, स च देहप्रमाणेन भजनीयः, पृथुलकटीभागाया दीर्घः, कृशकटीभागायाश्च ह्रस्व इत्यर्थः, अवग्रहानन्तकस्य पुरतः पृष्ठतश्च द्वावपि पर्यन्तभागावाच्छादयन् [1]पर्धावत्कटयां बध्यते, तस्मिंश्च बद्धे [2]मल्लकच्छावद्भवति ॥५३२॥

[3]अथ ऊरुकार्धं भजतीति निरुक्तवशादर्धोरुकः, तौ द्वावपि—अवग्रहानन्तक-पट्टौ गृहीत्वा—अवष्टभ्य सर्वं कटीभागमाच्छादयति, स च मल्लचलनाकृतिः, [4]केवलम् ऊर्वोरन्तरे ऊरुद्वये च [5]कसाबद्धः, चलनकाऽपीदृश्येव, केवलमधो जानुप्रमाणा अस्यूता कसानिबद्धा लङ्किका—वंशोपरिनर्तकी तत्परिधानवत् ॥५३३॥

---

१ पार्धावत्-सं. ॥ २ मल्लकक्षा० इति बृहत्कल्प. टीका गा० ४०८५ ॥
३ "अड्डो-उरुकार्धं भजतीति अड्डोरुगो" इति नि. चूर्णिः भा. २। पृ.१९०। 'तथा अर्धं उरुकाद्विभजतीति निरुक्ताद्' इति धर्मसङ्ग्रहटीका भा. २। पृ. ६४A ॥
४ तुलना-"नवरं ऊरुगान्तरे ऊरुगेसु च योणिबंधः। चलणिगा वि एरिसा चेव,णवरं अहे जाणुप्पमाणा योत्रकनिबद्धा लंखिया-परिधानवत् ।।१४०२।।" इति निशीथचूर्णिः भा. २-पृ. १९०॥ ५ कसाबद्धा- मु. ॥

अन्तर्निवसनी पुनरुपरि कटीभागादारभ्य अधः अर्धजङ्घ[1] यावद्भवति, सा च परिधानकाले लीनतरा परिधीयते, आकुलतया जनहासो मा भूदिति, बहिर्निवसनी या उपरि कटीत आरभ्य अधो यावत् खलुगो–गुल्फः कट्यां च दवरकेण प्रतिबद्धा भवति ॥५३४॥

[2]इदमधः शरीरस्य षड्विधमुपकरणमुक्तम्, अथ ऊर्ध्वकायस्य कथ्यते, तत्र–'छाएई'[3] त्यादि, दैर्घ्यमाश्रित्य स्वहस्तेनार्धतृतीयहस्तप्रमाणः पृथुत्वेन तु हस्तमानः यद्वा, निजनिजशरीरप्रमाणनिष्पन्नः, अस्यूतः पार्श्वद्वयेऽपि कसाबद्धः [4]कापालिककञ्चुकवत्कञ्चुकः क्रियते, स च उरोरुहौ–स्तनौ छादयति, किम्भूतौ ?, तत्राह–'अणुक्कुइए' त्ति अणु–स्वल्पं यथा भवति एवं कुचितौ–कञ्चुकाभ्यन्तरे ससंचारौ न

---

१ ०जङ्घे सं० । जङ्घा-बृ.क. टीका पृ. १११५ ॥

२ तुलना-"अधो सरीरस्स षड्विधमुपकरणं दवरकसमममाहितं ।" इति निशीथचर्णिः भा. २ । पृ. १६० ॥

३ तुलना- "प्रच्छादयति "अणुकुए" त्ति अनुकंचिता अनुत्क्षिप्ता इत्यर्थः, गंड इति स्तना । अथवा 'अणुकुंचित'त्ति अनुः स्वल्पं, कुंच स्पन्दने, कंचुकाभ्यन्तरे सप्रविचारा, ण गाढमित्यर्थः । गाढ–परिहरणे प्रतिविभागविभक्ता जनहार्या भवन्ति, तस्मात् कंचुकस्य प्रसिढिलं परिधानमित्यर्थः । स च कंचुको वीहत्तणेण सहत्थेणं अड्ढाइज्ज-हत्थो, पुहुत्तेणं हत्थो, असिव्वितो, कापालिककंचुकवत्, उभओ कडिदेसे जोत्तयपडिबद्धो । अहवा प्रमाणं सरीरात् णिष्पादयितव्यमित्यर्थः । कच्छाए समीवं उवकच्छं, वकारलोपं काउं तं छादयतीति उक्कच्छिया पाययसीलीए सक्कच्छिया । एमेव य उक्कच्छियाए प्रमाणं वक्तव्यम् । सा य समचउरंसा । सहत्थेण दिवड्ढ हत्था । उरं दाहि-णपासं पट्ठिं च च्छादेंति परिहिज्जति । खधे वामपासे य जोत्तपडिबद्धा भवति ॥ १४०४ ॥" इति निशीथचूर्णिः भा. २-पृ १६०॥ ४ तुलना-"कापालिककन्थावत्" इति धर्मसङ्ग्रहटीका भा. २ । ६४A ॥

गाढं सम्पृक्तावित्यर्थः, गाढपरिधाने हि अतिविविक्तविभागतया जननयनमनःस्पृहणीयरूपौ भवतः, तस्मात्कञ्चुकस्य शिथिलमेव परिधानं विधेयमिति । कक्षायाः समीपमुपकक्षम्, तदाच्छादिका [1]उपकक्षिका 'एवमेव' कञ्चुकवद्भवति, सा च अस्यूता समचतुरस्रा स्वहस्तेन सार्धहस्तप्रमाणा उरोभागं दक्षिणपार्श्वं पृष्ठं च प्रच्छादयन्ती वामस्कन्धे-वामपार्श्वे च बीटकप्रतिबद्धा परिधीयते ॥५३५॥

वेगच्छियत्ति पूर्वार्धम्, उपकक्षिकाविपरीतो वैकक्षिकालक्षणः पट्टो भवति, तुशब्द उपकच्चिकासादृश्यावधारणे वामपार्श्वपरिधानविशेषे वा द्रष्टव्यः, स च कञ्चुकमुपकक्षिकां चाच्छादयन् वामपार्श्वे परिधीयते ।

'संघाडीओ' इत्यादि [2]सार्द्धगाथा, उपरि परिभोगाय चतस्रः सङ्घाटयो भवन्ति, एका द्विहस्ता पृथुत्वेन द्वे त्रिहस्ते, एका च चतुर्हस्ता, दैर्घ्येण तु चतस्रोऽपि सार्धहस्तत्रयप्रमाणाश्चतुर्हस्ता वा द्रष्टव्याः, तत्र 'द्विहस्ता' द्विहस्तविस्तृता उपाश्रये भवति, न तां विहाय प्रकटदेहया कदाचिदासितव्यमिति भावः, ये च द्वे 'त्रिहस्तायामे' त्रिहस्तविस्तृते भवतस्तयोर्मध्ये एका भिक्षार्थम् एका उच्चारे भवति, भेदग्रहणं गोचर्याद्युपलब्धतुल्यवेषादिपरिहारार्थम्, तथा 'अवसरणे'—समवसरणे व्याख्याने स्नात्रादौ 'चतुर्हस्ता' चतुर्हस्तविस्तृता सङ्घाटिर्भवति, सा च अनिषण्णप्रच्छादनायोपयुज्यते, यतो न तत्र संयतीभिरुपवेष्टव्यं किन्तु ऊर्द्ध्वाभिरेव स्थातव्यम्, ततस्तया स्कन्धादारभ्य पादौ यावद् व्रतिन्यो

१ ओपकक्षिका मु.। "कक्षायाः समीपमुपकक्षम्, तत्र भवा औपकक्षिकी, अध्यात्मादित्वादिकण् प्रत्ययः।" इति बृहत्कल्पटीका पृ. १११५। "कक्षासमीपमुपकक्षम्, तथाऽऽच्छादिकोपकक्षिकोत्कक्षिका वा।" इति धर्मसङ्ग्रह टीका भा. २। पृ. ६४ A ॥ २ सार्धा गाथा-मु. ॥

वपुः प्रच्छादयन्तीति, एताश्च पूर्वप्रावृतवेषप्रच्छादनार्थं श्लाघादीप्त्यर्थं च मसृणाः क्रियन्ते, चतस्रोऽपि च गणनाप्रमाणेन एकमेव रूपम्, युगपत्परिभोगाभावात् ॥५३६-५३७॥

'खंधे'त्यादि स्कन्धकरणी 'चतुर्हस्तविस्तृता' चतुर्हस्तदीर्घा च समचतुरस्रा प्रावरणस्य वातविधुतरक्षणार्थं चतुष्पुटीकृत्य स्कन्धे ध्रियते, सैव च स्कन्धकरणी रूपवत्याः संयत्याः [1]कुडुभनिमित्तं कुब्जकरण्यपि क्रियते, पृष्ठप्रदेशे स्कन्धादधः संवृततया मसृणवस्त्रपट्टकेन उपकक्षिका-वैकक्षिकानिबद्धया तया विरूपतापादनाय [2]कुडुभं विधीयते इति [3]भावः ॥५३८॥६२॥

सम्प्रति 'जिणकप्पियाण संखा उक्किट्ठा एगवसहीए' त्ति त्रिषष्टं द्वारमाह—

जिणकप्पिया य साहू उक्कोसेणं तु एगवसहीए ।
सत्त य हवंति कहमवि अहिया कइयावि नो हुंति ॥५३९॥

'जिणकप्पिया य गाहा', इह च विनेयजनानुग्रहार्थं किञ्चिदप्रतीतार्थत्वादुत्तरत्र यथालन्दकल्पादौ

१ कुटुम० बृहत्कल्पटीका पृ. १११६ ॥ २ कुटुभं बृहत्कल्पटीका पृ. १११६ ॥
३ "उपसंहरन्नाह-सघातिमेतरो वा, सव्वोऽवेसो समासओ उवधि । पासगबद्धमझुसिरो जं चाऽऽइण्णं तगं णेयं ॥ बृहत्कल्पभा. ४०९२ ॥ सर्वोऽपि 'एषः' अनन्तरोक्त उपधिः समासतो द्विधा–सङ्घातिम इतरश्च । द्वित्र्यादिखण्डानां मीलनेन निष्पन्नः सङ्घातिमः, 'इतरः' तद्विपरीतोऽसङ्घातिमः । अयं च 'पाशकबद्धः' कसाबद्धः तथा 'अशुषिरः' गृहिसीवनिकारहितः प्रतिथिग्गलवर्जितो वा । यच्चात्र द्रव्य-क्षेत्र-काल-भावेषु संविग्नगीतार्थैः पूर्वसूरिभिराचीर्णं तत् सर्वमपि 'ज्ञेयं' सम्यगुपादेयतया मन्तव्यम् ॥४०९२॥" इति बृहत्कल्पटीका पृ. १११६ ॥

सप्रयोजनत्वाच्च प्रथमं [1]जिनकल्पिकस्वरूपमेव निरूप्यते । तत्र जिनकल्पं प्रतिपित्सुना प्रथममेव [2]पूर्वापररात्रकाले तावदिदं चिन्तनीयं-विशुद्धचारित्रानुष्ठानेन कृतं मयाऽऽत्महितं शिष्यादिनिष्पादनतः परहितं च, जाताश्चेदानीं मम गच्छपरिपालनसमर्थाः शिष्याः, ततो विशेषतः साम्प्रतमात्महितं ममानुष्ठानमुचितम् इति, विचिन्त्य चेदं [3]सति परिज्ञाने निजमायुःशेषं स्वयमेव पर्यालोचयति, परिज्ञानाभावे पुनरन्यमतिशायिनमाचार्यादिकं पृच्छति, तत्र स्वल्पे स्वायुषि भक्तपरिज्ञानादिनामन्यतमन्मरणमङ्गीकरोति, अथ दीर्घमायुः केवलं जङ्घाबलपरिक्षीणस्तदा वृद्धवासं स्वीकुरुते, पुष्टायां तु शक्तौ जिनकल्पं प्रतिपद्यते, तं च प्रतिपत्तुकामः पूर्वमेव पञ्चभिस्तुलनाभिरात्मानं तोलयति, तद्यथा—

" [4]तवेण सत्तेण सुत्तेण,एगत्तेण बलेण य । तुलणा पंचहा वुत्ता जिणकप्पं पडिवज्जओ ॥१॥"[बृ.क.भा.

१ जिनकल्पस्व० सं. । इत आरभ्य तुलना-धर्मसङ्ग्रहटीका भा. २। पृ. १८३ Aतः ॥ तुलना-"सो पुव्वावरकाले जागरमाणो उ धम्मजागरिअ उत्तमपसत्थझाणो हिअएण इमं विचिंतेइ ॥" इति पञ्चवस्तुकः १३७२॥

२ "अणुपालिओ य दीहो, परियाओ वायणा वि मे दिन्ना । निप्फाइया य सीसा, सेयं खु महप्पणो काउं" ॥ इति बृ.क. भा. गाथा १२८१॥ तुलना-पञ्चवस्तुकः गाथा १३७२तः ॥

३ तुलना-"सयमेव आउकालं, नाउं पोच्छित्तु वा बहुं सेसं । सुबहुगुणलाभकंखी, विहारमब्भुज्जयं भजइ" ॥ इति बृ. क. भा. गाथा १२८४ ॥ पञ्चवस्तुक. १३७७ ॥

४ अस्य क्षेमकीर्तिसूरिकृता व्याख्या-"तपसा सत्वेन सूत्रेण एकत्वेन बलेन च एवं 'तुलना' भावना पञ्चधा प्रोक्ता जिनकल्पं प्रतिपद्यमानस्य इति निर्युक्तिगाथासमासार्थः" ॥१३२८॥ इति बृहत्कल्प टीका पृ. ॥ ४०७ ॥

१३२८] तुलना भावना परिकर्म चेत्येकार्थानि, [1]तत्राचार्योपाध्याय-प्रवर्तक-स्थविर-गणावच्छेदकस्वरूपाः प्रायः पञ्चैव जनाः प्रशस्ताभिरेताभिः पञ्चभिर्भावनाभिर्जिनकल्पं प्रतिपित्सवः प्रथममेवात्मानं भावयन्ति, अप्रशस्तास्तु कन्दर्प-देवकिल्बिषा-ऽऽभियोगिका-ऽऽसुर-सम्मोहस्वरूपाः पञ्च भावना वक्ष्यमाणाः सर्वथा दूरतः परिहरन्ति, [2]तत्र तपसाऽऽत्मानं भावयंस्तथा क्षुधां पराजयति यथा देवाद्युपसर्गादिनाऽनेषणीयादि-करणतो यदि पण्मासान् यावदाहारं न लभते तथापि न बाध्यते। [3]सत्त्वभावनया तु भयं निद्रां च

१ तुलना-"गणि-उवज्झाय-पवित्ती थेर-गणच्छेइआ इमे पच। पायमहिगारिणो इह तेसिमिमा होइ तुलणा उ॥" पञ्चवस्तुकः १३७८॥ २ तुलना-"जो जेण अणब्भत्थो पोरिसिमाईं तवो उ तं तिगुणं। कुणइ छुआविजयट्ठा गिरिनइसीहेण दिट्ठंतो॥१३२९॥ एक्केक्कं ताव तव, करेइ जह तेण कीरमाणेणं। हाणी न होइ जइआ, वि होज्ज छम्मासुवसग्गो ॥१३३०॥ अप्पाहारस्स न इंदियाइ विसएसु संपवत्तंति। नेव किलम्मइ तवसा, रसिएसु न सज्जए यावि॥१३३१॥ तवभावणाइ पंचिंदियाणि दंताणि जस्स वसमिंति। इंदियजोग्गा (गा) यरिओ समाहिकरणाइं कारयए॥१३३२॥" इति बृहत्कल्पभाष्यम्। पञ्चवस्तुकः १३९०-३। विशेषार्थिना द्रष्टव्या बृहत्कल्पटीका पृ.४० ७ पञ्चवस्तुकटीका पृ.१९९॥
३ तुलना-"जे वि य पुव्विं निसि निग्गमेसु विसहिंसु साहस-भयाइं। अहि-तक्कर-गोवाई, विसिंसु घोरे य संगामे ॥१३३३॥ पासुत्ताण तुयट्टं, सोयव्वं जं च तीसु जामेसु। थोवं थोवं जिणइ उ, भयं च जं संभवइ जत्थ॥१३३४॥ भोगजढे गंभीरे, उव्वरए कोट्ठए अलिंदे वा। तणुसाइ जागरो वा, झाणट्ठाए भयं जिणइ॥१३३६॥ छिक्कस्स व खइयस्स व, मूसिगमाईहिं वा निसिचरेहिं। जह सहसा न वि जायइ रोमंचुब्भेय चाडो वा॥१३३७॥ सविसेसतरा बाहिं, तक्कर-आरक्खि-सावयाईया। सुण्णघर-सुसाणेसु य, सविसेसतरा भवे तिविहा॥१३३८॥ देवेहिं भेसिओ वि य, दिया व राओ व भीमरूवेहिं। तो सत्तभावणाए, वहइ भरं निब्भओ सयलं॥१३३९॥" इति बृहत्कल्पभाष्यम्। विशेषार्थं द्रष्टव्या बृहत्कल्पटीका पृ. ४०८॥ सटीकः पञ्चवस्तुकः १३९५-७ अपि द्रष्टव्यः॥

पराजयते, तत्र भय निद्राजयार्थं रात्रौ सुप्तेषु सर्वसाधुषूपाश्रय एव कायोत्सर्गं कुर्वतः प्रथमा सत्त्वभावना भवति, द्वितीयाद्यास्तूपाश्रयबाह्यादिप्रदेशेषु, आह च–

" [1]पढमा उवस्सयंमि य बीया बाहिं तइया चउक्कंमि । सुन्नघरंमि चउत्थी अह पंचमिया मसाणंमि ॥१॥" [बृ. क. भाष्य १३३५]

[2]सूत्रभावनया तु निजनामवत्तथा परिचितं सूत्रं करोति यथा दिवा रात्रौ वा शरीरच्छायाद्य-

१ अस्य क्षेमकीर्तिसूरिकृता व्याख्या "प्रथमा प्रतिमा उपाश्रये १ द्वितीया उपाश्रयाद् बहिः २ तृतीया 'चतुष्के' चत्वरे ३ चतुर्थी शून्यगृहे ४ पञ्चमी स्मशाने ५ ॥ बृ. क. टीका पृ. ४०८ ॥ तुलना-पञ्चवस्तुकः १३९५ टीका च ॥

२ तुलना-"जइ वि य सनाममिव परिचियं सुअं अणहिय-अहीणवन्नाई । कालपरिमाणहेउं, तहावि खलु तज्जयं कुणइ ॥ बृ. क. भा. १३४०॥ यद्यपि स्वनामेव तस्य श्रुतं परिचितम् अनधिका-ऽहीनवर्णादि' अनत्यक्षरम् अहीनाक्षरम् आदिशब्दाद् अव्याविद्धाक्षरादिगुणोपेतं च तथापि कालपरिमाणहेतोः 'तज्जयं' श्रुताभ्यासं करोति ॥१३४०॥ कथम् ? इति चेद् उच्यते-उस्सासाओ पाणू तओ य थोवो तओ विय मुहुत्तो ॥ मुहुत्तेहिं पोरिसीओ जाणेइ निसा य दिवसा य ॥ बृ. क. भा. १३४१ ॥ श्रुतपरावर्त्तनानुसारेणैव सम्यगुच्छ्वासमानं कलयति, तत उच्छ्वासात् 'प्राणः' उच्छ्वास-निःश्वासात्मकः, ततश्च प्राणात् 'स्तोकः' सप्तप्राणमानः, ततोऽपि च स्तोकाद् 'मुहूर्त्तः' घटिकाद्वयमानः, मुहूर्तैश्च पौरुष्यस्तेन भगवता ज्ञायन्ते ताभिश्च पौरुषीभिर्निशाश्च दिवसाँश्च जानाति ॥१३४१॥ बृहत्कल्पटीका पृ. ४०९॥ मेहाइछन्नेसु वि, उभओकालमहवा उवस्सग्गे । पेहाइ भिक्ख पंथे, नाहिइ कालं विणा छायं॥ एगग्गया सुमह निज्जरा य नेव भिणणम्मि पलिमंथो । न पराहीणं नाणं,काले जह मंसचक्खूणं ॥ सुयभावणाएँ नाणं, दंसण तवसजमं च परिणमइ । तो उवओगपरिण्णो, सुयमव्वहितो समाणेइ ॥" इति बृहत्कल्पभाष्ये सटीके १३४२-४ । पञ्चवस्तुकः १३९८-१४०१ अपि द्रष्टव्यः ॥

भावेऽप्युच्छ्वास-प्राण-स्तोक-लव-मुहूर्त्तादिकं कालं सूत्रपरावर्तनानुसारेणैव सर्वं सम्यगवगच्छति । [1]एकत्वभावनया चात्मानं भावयन् [2]सङ्घाटिक साध्वादिना सह पूर्वप्रवृत्तानालाप-सूत्रार्थ-सुखदुःखादिप्रश्न-मिथः कथादिव्यतिकरान्निराकरोति, ततो बाह्यममत्वे मूलत एव व्यवच्छेदिते पश्चाद्देहोपध्यादिभ्योऽपि भिन्नमात्मानमवलोकयन् सर्वथा तेष्वपि निरभिष्वङ्गो भवति । [3]बलभावनायां बलं द्विविधं–शारीरं मनोधृतिबलं च, [4]तत्र शारीरमपि बलं जिनकल्पार्हस्य शेषजनातिशायिकमेष्टव्यम् , तपःप्रभृतिभिस्तु अपकृष्य-

---

१ तुलना–"जइ वि य पुव्वममत्तं, छिन्नं साहूहिं दारमाईसु । आयरियाइममत्तं तहा वि संजायए पच्छा ॥१३४५॥
दिट्ठीनिवायाऽऽलावे, अवरोप्परकारियं सपडिपुच्छं । परिहास मिहो य कहा, पुव्वपवत्ता परिहवेइ ॥१३४६॥
तणुईकयम्मि पुव्वं, बाहिरपेम्मे सहायमाईसु । आहारे उवहिम्मि य देहे य न सज्जए पच्छा ॥१३४७॥
पुव्विं छिन्नममत्तो उत्तरकालं धविज्जमाणे वि । सामाविय इअरे वा, खुब्भइ दट्ठुं न संगइए ॥१३४८॥
एगत्तभावणाए, न कामभोगे गणे सरीरे वा । सज्जइ वेरग्गगओ फासेइ अणुत्तरं करणं ॥१३५२॥"
इति बृहत्कल्पभाष्यम् । विशेषार्थिना द्रष्टव्या बृहत्कल्पटीका पृ. ४१० ॥ पञ्चवस्तुकः १४०२-५ अपि द्रष्टव्यः ।
२ सङ्घाटकसंङ्घाटक साध्वादिना-मु० । सङ्घाटिकसाधु० इति बृ. क. टीका पृ. ४१० ॥
३ तुलना-"भावो अभिस्संगो सो उ पसत्थो व अप्पसत्थो वा । नेह गुणओ उ रागो, अपसत्थ पसत्थओ चेव ॥१३५३॥
कामं तु सरीरबलं, हायइ तव-नाणभावणजुअस्स । देहावचए वि सती, जह होइ धिई तहा जयइ ॥१३५४॥
कसिणा परिसहचमू, जइ उट्ठिज्जाहि सोवसग्गा वि । दुद्धरपहकरवेगा, भयजणणी अप्पसत्ताणं ॥१३५५॥
धिइधणियबद्धकच्छो, जोहेइ अणाउलो तमव्वहिओ । बलभावणाए धीरो संपुण्ण मणोरहो होइ ॥१३५६॥
धिइ-बलपुरस्सराओ, हवंति सव्वा वि भावणा एता । तं तु न विज्जइ सज्झं, जं धिइमंतो न साहेइ ॥१३५७॥"
इति बृहत्कल्पभाष्यम् । पञ्चवस्तुकः १४०६-९,पञ्चवस्तुकटीका पृ. २०१, बृहत्कल्पटीका पृ. ४११ तश्च द्रष्टव्याः ॥
४ तुलना-बृ.कल्पटीका पृ. ४१२ । पं. १ ॥

माणस्य यद्यपि शारीरं बलं तथाविधं न भवति तथापि धृतिबलेनात्मा तथा भावयितव्यो यथा महद्भिरपि परीषहोपसर्गैर्न बाध्यते।

एताभिः पञ्चभिर्भावनाभिर्भावितात्मा [1]जिनकल्पिकप्रतिरूपो गच्छेऽपि प्रतिवसन्नुपध्या-ऽऽहार-विषये [2]द्विविधे परिकर्मणि प्रवर्तते, तत्र यदि पाणिपात्रलब्धिरस्ति ततस्तदनुरूपमेव परिकर्म चेष्टते, अथ पाणिपात्रलब्धिर्नास्ति ततः [3]पतद्ग्रहधारित्वपरिकर्मणि यथायोगं प्रवर्तते, आहारपरिकर्मणि तु तृतीय-पौरुष्यामवगाढायां वल्ल-चणकादिकमन्तं[4] प्रान्तं रूक्षं च—

---

१ तुलना-"जिणकप्पियपडिरूवी गच्छे वसमाण दुविह परिकम्मं। ततियं भिक्खायरिया पंतं लूहं अभिगहिया" ॥ इति बृहत्कल्पभाष्यम् १३५८ ॥

२ "अथ द्विविध परिकम व्याख्यानयति-पाणी पडिग्गहेण व, सच्चेल निच्चेलओ जहा भविया। सो तेण पगारेणं, भावेइ अणागयं चेव ॥बृ.क.भा. १३६१॥ द्विविधं परिकर्म, तद्यथा—पाणिपरिकर्म प्रतिग्रहपरिकर्म च, अथवा सचेलपरिकर्म अचेलपरिकर्म च। तत्र यो यथा पाणिपात्रधारकः प्रतिग्रहधारको वा सचेलको अचेलको वा भविता स तेनैव प्रकारेण पाणिपात्रभोजित्वादिना अनागतमेवाऽऽत्मानं भावयति॥१३६१॥ प्रकारान्तरमाह—आहारे उवहिम्मि य, अहवा दुविह तु होइ परिकम्मं। पंचसु अ दोसु अगगह, अभिग्गहो अन्नयरियाए॥१३६२॥ अथवा द्विविधं परिकर्म आहारे उपधौ च।" .......इति बृहत्कल्पटीका पृ. ४१३॥ बृहत्कल्पचूर्णिरपि द्रष्टव्या बृ.क.टी. पृ. ४१३॥

३ परिग्रह० सं. ॥ ४ "निप्फाव-चणकमाई, अंतं पंतं तु होइ वावण्णं। नेहरहियं तु लूहं, जं वा अबलं सभावेणं ॥"इति बृहत्कल्पभाष्यम् ॥१३६३॥

△" [1]संसट्ठमसंसट्ठा उद्धड तह अप्पलेवडा चेव । उग्गहिया पग्गहिया उज्झियधम्मा य सत्तमिया ॥१॥"

[2]एतासां सप्तानां पिण्डैषणानां मध्ये आद्यद्वयवर्ज्यं शेषाणां पञ्चानां मध्यादन्यतरैषणाद्वयाभिग्रहेणाहारं गृह्णाति, तत्राप्येकया भक्तमपरयाऽन्वेषणया पानकमिति ॥

एवमाद्यागमोक्तविधिना गच्छान्तर्गतः पूर्वमेवात्मानं परिकर्मयित्वा ततो जिनकल्पं प्रतिपित्सुः [3]समग्रमपि सङ्घं मीलयति, तदभावे स्वगणं तावदवश्यमाह्वयते, ततस्तीर्थकरसमीपे तदभावे गणधर-सन्निधाने तदसत्त्वे च चतुर्दशपूर्वधरसविधे तदसम्भवे दशपूर्वधरान्तिके तदलाभे तु वटा-ऽश्वत्था-ऽशोकपाद-पादीनामासत्तौ महत्या विभूत्या जिनकल्पमभ्युपगच्छति, [4]निजपदव्यवस्थापितं सूरिं सबालवृद्धं गच्छं विशेषतः पूर्वविरुद्धांश्च क्षमयति, तद्यथा—

---

△ असंसृष्टा संसृष्टा उद्धृता तथा अल्पलेपिका । अवगृहिता प्रगृहिता उज्झितधर्मा च सप्तमी ॥ १ ॥

१ संसट्ठमसंसट्ठा उद्धवा अप्पडा लवडा चेव— सं. । 'संसट्ठाऽसंसट्ठा उद्धड तह होइ अप्पलेवा य' । इति पञ्चवस्तु-टीका पृ. २०२ A । सन्मतितर्क प्रकरणवृत्तौ [पृ. ७५५] अप्पलेविया-इति पाठः ॥

२ तुलना-"तइआए अलेवाडं पंचण्णयरीए भयइ आहारं । दोण्हऽण्णयरीएँ पुणो उवहिं च अहागडं चेव ॥" इति पञ्चवस्तुकः १४१२ ॥

३ तुलना-"दव्वाई अणुकूले, संघं असती गणं समाहूय । जिण गणहरे य चउदस, अभिन्न असती य वडमाई"॥ इति बृहत्कल्पभाष्य १३६६॥ पञ्चवस्तुकः १४१७ अपि द्रष्टव्यः ॥

४ तुलना-"गणि गणहरं ठवित्ता, खामे अगणी उ केवलं खामे । सव्वं च बाल-वुड्ढं, पुव्वविरुद्धे विसेसेणं ॥" इति बृहत्कल्पभाष्यम् १३६७॥ पञ्चवस्तुकः १४१५ अपि द्रष्टव्यः ॥

[1]"जइ किंचि पमाएणं न सुट्ठु मे वट्टियं मए पुव्विं। तं मे खामेमि अहं निसल्लो निक्कसाओ य॥१॥ [2]आणंदमंसुपायं कुणमाणा तेऽवि भूमिगयसीसा । [3]खामिंति तं जहरिहं जहारिहं खामिया तेणं ॥२॥" [बृहत्कल्पभाष्यम् १३६८-९] निजपदस्थापितसूरेः शेषसाधूनां चानुशास्तिं प्रयच्छति, यथा—△"पालेज्जसु गणमेयं अप्पडिबद्धो य होज्ज सव्वत्थ। एसो य परंपरओ तुमंपि अंते कुणसु एवं ।१। [4]पुव्वपवण्णं विणयं मा हु पमाएहि विणयजोग्गेसु जो जेण पगारेण उवजुज्जइ तं च जाणेहि।२। [5]तथा "ओमो समराइणिओ अप्पतरसुओ य मा य णं तुब्भे । परिभवइ एस तुम्हवि विसेसओ संपयं पुज्जो ।३।" [बृ. क.भा. १३७२-१३७३]

---

१ अस्य क्षेमकीर्तिसूरिकृता व्याख्या-"यदि किञ्चित् 'प्रमादेन' अनाभोगादिना न सुष्ठु 'भे' भवतां मया वर्त्तितं पूर्वं तद् 'भे' युष्मान् क्षमयाम्यहं निःशल्यो निष्कषायश्च ॥१३६८॥ इत्थं तेन क्षमिते सति शेषसाधवः किं कुर्वन्ति ? इत्याह-'तेपि' साधवः आनन्दाश्रुपातं कुर्वाणाः 'भूमिगतशीर्षाः' क्षितिनिहितशिरसः सन्तः क्षमयन्ति 'यथार्हं' यो यो रत्नाधिकः स स प्रथममित्यर्थः, तेनाचार्येण 'यथार्हं' यथापर्यायज्येष्ठं क्षामिताः सन्ति इति" ॥१३६९॥ इति बृहत्कल्पटीका पृ. ४१५॥ २ 'आणंदअसुपायं' इति बृ.क.भा १३६९ पाठः ॥
३ 'खामिंति जहरिहं खलु, जहारिहं खामिता तेणं' इति बृ.क.भा. १३६९॥
△ पालयेर्गणमेनप्रतिबद्धश्च भवेः सर्वत्र । एष च परम्परकः त्वमप्यन्ते कुर्याः ॥
४ तुलना-'पुव्वपवित्तं विणय, मा हु पमाएहिं विणयजोगेसु । जो जेण पगारेणं, उववज्जइ तं च जाणाहिं ॥ बृहत्कल्पभाष्यम् १३७२॥ ये च तत्र बहुश्रुत-पर्यायज्येष्ठादयो विनययोग्याः-गौरवार्हास्तेषु 'पूर्वप्रवृत्तं' यथोचि विनयं 'मा प्रमादयेः' मा प्रमादेन परिहापयेः । यश्च साधुर्येन तपः-स्वाध्याय-वैयावृत्त्यादिना प्रकारेण 'उपयुज्यते' निर्जराप्रत्युपयोगमुपयाति 'तं च जानीहि' तं तथैव प्रवर्तयेत्यर्थः ॥१३७२॥इतिबृहत्कल्पटीका पृ. ४१६॥
५ तुलना-"अथ साधूनामनुशिष्टिं प्रयच्छति-ओमो समराइणिओ, अप्पतरसुओ अ मा य णं तुब्भे । परिभवइ तुम्ह

इत्यादिशिक्षां दत्त्वा [1]गच्छाद्विनिर्गते चक्षुर्गोचरातीते तस्मिन्नानन्दिताः साधवः प्रतिनिवर्तन्ते, एवं च प्रतिपन्नजिनकल्पो यत्र [2]ग्रामादौ मासकल्पं चतुर्मासकं वा करिष्यति तत्र षट् [3]भागान् ग्रामादेः कल्पयति, ततश्च यत्र भागे एकस्मिन् दिने गोचरचर्यायां हिण्डितस्तत्र पुनरपि सप्तम एव दिवसे पर्यटति, भिक्षाचर्यां ग्रामान्तरगमनं च तृतीयपौरुष्यामेव करोति, चतुर्थपौरुषी तु यत्रावगाहते तत्र नियमादवतिष्ठते, भक्तं पानकं च पूर्वोक्तैषणाद्वयाभिग्रहेणालेपकृदेव गृह्णाति, एषणादिविषयं मुक्त्वा न केनापि सार्धं जल्पति, उपसर्ग-परीषहान् सर्वानपि सहत एव, रोगेऽपि चिकित्सां न कारयत्येव, तद्वेदनां तु सम्यगेव विषहते, एकाक्येव च भवति, [4]अनापाता-ऽसंलोकादिदशगुणोपेत एव स्थण्डिले उच्चारादि करोति, जीर्ण-

---

एसो, विसेसओ सपयं पुज्जो ॥बृहत्कल्पभा. १३७३॥ अवमोऽयं समरात्निकोऽय अल्पतरश्रुतो वाऽयमस्मदपेक्षया, अतः किमर्थमस्य आज्ञानिर्देशं वयं कुर्महे ? इति मा यूयममुं परिभवत। यत एष युष्माकं साम्प्रतमस्मत्स्थानी-यत्वाद् गुरुतरगुणाधिकत्वाच्च विशेषतः पूज्यः, न पुनरवज्ञातुमुचित इति भावः" ॥१३७४॥ इति बृहत्कल्पटीका पृ. ४१६ ॥

१ तुलना-"निच्चेले सचेले वा गच्छारामा विणिग्गए तम्मि। चक्खुविसयं अईए अयंति आणंदिया साहू" ॥ इति बृहत्कल्पभा. १३७६॥

२ तुलना-'छव्वीहीओ गामं काउं एक्किक्कियं तु सो भडइ। वज्जेउं होइ सुहं, अनिययवित्तिस्स कम्माई" इति बृ. क. भा. १४००॥

३ भागान् कल्पयति-जे सं. ॥ ४ तुलना-"उच्चारे पासवणे उसग्गं कुणइ थंडिले पढमे। तत्थेव य परिजुण्णे कयकिच्चो उज्झई वत्थे" ॥ इति बृ. क. भा. १३८९, पञ्चवस्तुक; १४३५ ॥

वस्त्राणि च तत्रैव त्यजति, [1]प्रमार्जनादिपरिकर्मविरहितायां वसतौ तिष्ठति, [2]यद्युपविशति तदा नियमादुत्कटुक एव न तु निषद्यायामौपग्रहिकोपकरणस्यैवाभावात्, मासकल्पेनैव चायं विहरति, मत्तमतङ्गजव्याघ्रसिंहादिके च संमुखे समापतत्युन्मार्गगमनादिना ईर्यासमितिं न भिनत्ति, [3]श्रुतसम्पदपि चास्य जघन्यतो नवमस्य पूर्वस्य तृतीयमाचारवस्तु, तत्र हि न्यक्षेण कालपरिज्ञानम्, उत्कर्षतस्तु असम्पूर्णानि दश पूर्वाणि, प्रथमसंहननो वज्रकुडयसमानावष्टम्भश्चायं भवति, लोचं चासौ नित्यमेव विधत्ते, [4]आवश्यकी-नैषेधिकी-मिथ्यादुष्कृत-गृहिविषयपृच्छोपसंपल्लक्षणाः पञ्च सामाचार्योऽस्य भवन्ति, [5]अन्ये त्वाहुः—आवश्यकी-नैषेधिकी-गृहस्थोपसम्पल्लक्षणास्तिस्र एव, आरामादिनिवासिन ओघतः पृच्छादीनामपि असम्भवादित्याद्यन्याऽपि जिनकल्पिकानां [6]सामाचारी कल्पग्रन्थादेरवगन्तव्या ॥

१ तुलना-'अममत्त अपरिकम्मा नियमा जिणकप्पाण वसहीओ ॥" इति बृहत्कल्प.१३६१॥ तुलना-पञ्चवस्तुकः १४२६॥
२ "अत्रैव विधिविशेषमाह-उक्कुडुयासणसमुइं, करेइ पुढवीसिलाइसुववेसे । पडिवन्नो पुण नियमा, उक्कुडुओ केइ उ भयंति ॥१३६४॥ त तु न जुज्जइ जम्हा, अणंतरो नत्थि भूमिपरिभोगो । तम्मि य हु तस्स काले ओवग्गहितोवही नत्थि ॥१३६५॥" इति बृहत्कल्पभाष्यम् ॥
३ तुलना-'आयारवत्थुतइयं जहन्नयं होइ नवमपुव्वस्स । तहियं कालण्णाणं, दस उक्कोसेण भिन्नाइं' ॥ इति बृ.क.भा. १३८५, पञ्चवस्तुकः१४२९ ॥
४ तुलना-"आवसि निसीहि मिच्छा, आपुच्छुवसंपदं च गिहिएसु । अन्ना सामायारी न होंति से सेसिया पंच" ॥ इति बृ. क. भा. १३७९ ॥ पञ्चवस्तुकः १४२३ ॥ ५ तुलना-"आदेशान्तरमाह-"आवासियं निसीहियं मोत्तुं उवसंपयं च गिहिएसु । सेसा सामायारी, न होंति जिणकप्पिए सत्त' ॥ इति बृ. क. भा. १३८० ॥ पञ्चवस्तुकः १४२४॥
६ बृहत्कल्प. पृ. ४१७ तः द्रष्टव्यम् । पञ्चवस्तुकः पृ. २०३ तः द्रष्टव्यः ॥

तथा जिनकल्पिकस्थितिप्रतिपादनार्थं सोपयोगत्वात् कानिचिद् द्वाराणि दर्श्यन्ते, [1]तद्यथा–क्षेत्रद्वारं १ कालद्वारं २ चारित्रद्वारं ३ तीर्थद्वारं ४ पर्यायद्वारम् ५ आगमद्वारं ६ वेदद्वारं ७ कल्पद्वारं ८ लिङ्गद्वारं ९ ध्यानद्वारं १० गणनाद्वारम् ११ अभिग्रहद्वारं १२ प्रव्राजनाद्वारं १३ [2]निष्प्रतिकर्मताद्वारं १४ भिक्षाद्वारं १५ पथद्वारं १६ चेति, तत्र तीर्थ-पर्याया-ऽऽगम-वेद-ध्याना-ऽभिग्रह-प्रव्रज्या-निष्प्रतिकर्मता-भिक्षा-पथद्वाराण्येकोनसप्ततितमे परिहारविशुद्धिद्वारे यथा वक्ष्यन्ते तथैवात्रापि ज्ञेयानि। [3]क्षेत्रद्वारे जन्मना सद्भावेन च पञ्चदशस्वपि कर्मभूमिषु, संहरणेन त्वकर्मभूमिष्वपि भवति [4]कालद्वारे अवसर्पिण्यां जन्मना तृतीय-चतुर्थारकयोरेव व्रतस्थस्तु पञ्चमारकेऽपि, उत्सर्पिण्यां तु व्रतस्थस्तृतीय-चतुर्थारकयोरेव, जन्मना तु द्वितीयारकेऽपि, प्रतिभागकाले तु दुष्षमसुषमारूपे जन्मतः सद्भावतश्च प्राप्यते, विदेहेष्वपि जिनकल्पिकानां

---

१ तुलना–"खेत्ते काल चरित्ते, तित्थे परियाय आगमे वेए । कप्पे लिंगे लेसा, झाणे गणणा अभिगहा य ॥ पव्वावण मुंडावण, मणसाऽऽवन्ने वि से अणुग्घाया । कारण निप्पडिकम्मे, भत्तं पंथो य तइयाए" इति बृहत्कल्पभा. ॥१४१३-१४१४॥, पञ्चवस्तुकः १४८३-१४८४॥

२ १३ निष्प्रतिकर्मताद्वारं १४ पथद्वार १५ भिक्षाद्वारं चेति–सं. ॥

३ तुलना–"जम्मण-संतीभावेसु होज्ज सव्वासु कम्मभूमीसु । साहरणे पुण भइयं, कम्मे व अकम्मभूमे वा" इति बृ. क. भा. १४१५ ॥

४ तुलना–"ओसप्पिणीइ दोसुं, जम्मणतो तीसु संतीभावेणं । उस्सप्पिणि विवरीया, जम्मणतो संतिभावे य ॥१४१६॥ नोसप्पिणिउस्सप्पे भवंति पलिभागतो चउत्थम्मि । काले पलिभागेसु य साहरणे होंति सव्वेसु" इति ॥बृ. क. भा १४१७॥ विशेषार्थं बृहत्कल्पटीका द्रष्टव्या पृ. ४२४ ॥

सद्भावात् , संहरणेन पुनः सर्वस्मिन्नपि काले प्राप्यते, [1]चारित्रद्वारे प्रतिपद्यमानकः सामायिक-च्छेदोपस्थापनीययोरेव, मध्यम-विदेहतीर्थकृतां सामायिके प्रथम-पश्चिमजिनयोस्तु छेदोपस्थापनीये, पूर्वप्रतिपन्नस्तु सूक्ष्मसम्पराय-यथाख्यातचारित्रयोरपि, स चोपशमश्रेण्यामेव, न तु क्षपकश्रेण्याम् , [2]'तज्जम्मे केवलपडिसेहभावाओ' [पञ्चवस्तुकः १४९८] इति वचनात् । [3]कल्पद्वारे स्थितकल्पेऽस्थितकल्पे च भवति, लिङ्गद्वारे प्रतिपद्यमानको द्विविधेऽपि द्रव्य-भावरूपे लिङ्गे भवति, पूर्वप्रतिपन्नस्तु भावलिङ्गेऽवश्यमेव, द्रव्यलिङ्गे तु भाज्यो [4]हृतजीर्णतादिभिः कदाचिद् द्रव्यलिङ्गस्याभावात् , [5]गणनाद्वारे प्रतिपद्यमानका जघन्यत एकादय उत्कर्षतः शतपृथक्त्वम् , पूर्वप्रतिपन्नाः पुनर्जघन्यत उत्कर्षतश्च सहस्रपृथक्त्वम् , केवलमुत्कृष्टाज्जघन्यं लघुतरम् , इत्याद्यन्यदपि जिनकल्पिकस्वरूपं समयसमुद्रादवसेयमिति ।

सम्प्रति सूत्रमनुश्रियते, जिना-गच्छनिर्गतसाधुविशेषाः तेषां कल्पः—समाचारस्तेन चरन्तीति जिनकल्पिकाः, ते च जिनकल्पिकसाधवः उत्कर्षत एकस्यां वसतौ सप्त भवन्ति, अधिका-अष्टादयः कथमपि

१ तुलना-"पढमे वा बीये वा, पडिवज्जइ संजमम्मि जिणकप्पं । पुव्वपडिवन्नओ पुण, अन्नयरे संजमे होज्जा' इति बृ. क. भा. १४१८ ॥

२ "तज्जन्मन्यस्य केवलप्रतिषेधभावादिति गाथार्थः" । इति पञ्चवस्तुटीका पृ. २१३॥

३ तुलना-"ठियमट्ठियम्मि कप्पे, लिंगे भयणा उ दव्वलिंगेणं" इति बृ. क. भा. १४२१ ॥ पञ्चवस्तुकः १५०१॥

४ "इअरं तु जिण्णभावाइएहिं सययं न होइवि कयाइं । ण य तेण विणावि तहा जायइ से भावपरिहाणी" ॥ इति पंचवस्तुकः १५०२ ॥

५ तुलना-"पडिवज्जि सयपुहुत्तं, सहसपुहुत्तं च पडिवन्ने" ॥ इति बृ.क.भा.१४२२॥ पञ्चवस्तुकः १५०७-८ तुलनीयः ॥

कदाचनापि न भवन्ति, यद्यपि चैकस्यां वसतावुत्कृष्टतः सप्त जिनकल्पिकाः प्रतिवसन्ति तथापि परस्परं न भाषन्ते, ※धर्मवार्त्तामपि न कुर्वन्ति ※ वीथ्यामपि चैकस्यामेक एव जिनकल्पिकः प्रतिदिनमटति, न पुनरपर इति, उक्तं च–

∧"[1]एक्काए वसहीए उक्कोसेणं वसंति सत्त[2]जिणा । अवरोप्परसंभासं चइंति [3]अन्नोन्नवीहिं च"॥१॥
[बृ. क. भा. १४१२] ॥५३९॥'६३॥

'छत्तीसं [4]सूरिगुण' त्ति चतुःषष्टं द्वारमाह—

[5]अट्ठविहा [6]गणिसंपय [7]चउग्गुणा नवरि हुंति बत्तीसं ।
विणओ य चउब्भेओ छत्तीस गुणा इमे गुरुणो ॥५४०॥
आयार १ सुय २ सरीरे ३ वयणे ४ वायण ५ मई ६ पओगमई ७ ।
[8]एएसु संपया खलु अट्ठमिया [9]संगहपरिण्णा ८ (१) ॥५४१॥

※ ※ चिह्नद्वयमध्यवर्तीपाठः नास्ति जे. सं.॥ ∧एकस्यां वसतौ उत्कर्षतो वसन्ति सप्त जिनाः । परस्परं संभाषं त्यजन्ति अन्योऽन्यवीथिं च ॥१॥ १ तुलना-"वीहिए एक्काए एक्को च्चिअ पइदिणं अडइ एसो । अण्णे भणंति मयणा सा य ण जुत्तिक्खमा सोआ ॥१४७९॥ एएसिं सत्त वीही एत्तो च्चिअ पायसो जओ भणिआ । कह नाम अणोमाणं ? हविज्ज गुणकारणं णिअमा ॥१४८०॥ अइसइणो अ जमेए वीहिविभागं अओ विआणंति । ठाणाईएहिं धीरा समयपसिद्धेहिं लिंगेहिं ॥" १४८१ ॥ इति पञ्चवस्तुकः ॥
२ जणा-इति बृहत्कल्पभा. १४१२ । पञ्चवस्तुकः १४७८ ॥
३ अन्नान्न० मु. ॥ ४ सूरिणगुणत्ति-मु. ॥ ५ तुलना-सम्बोधप्रकरण ३-१८ ॥ ६ गणिसंपइ-जे. ॥
७ चउग्गुणा हुंति नवरि बत्तीसं-ता. ॥ ८ एएउ-ता. ॥ ९ ०पइण्णा-जे. ता. । परिन्ना. धर्मरत्नप्र.दे.टीका ॥

चरणजुओ मयरहिओ अनिययवित्ती अचंचलो चेव (४) ।
जुगपरिच्चिय [1]उस्सग्गी उदत्तघोसाइ [2]विन्नेओ (८) ॥५४२॥
चउरंसोऽकुंटाई बहिरत्तणवज्जिओ तवे सत्तो (१२) ।
वाई महुरत्तऽनिस्सिय फुडवयणो संपया [3]वयणे (१६) ॥५४३॥
[4]जोगो परिणयवायण निज्जविया वायणाए निव्वहणे (२०) ।
ओग्गह [5]ईहावाया धारण मइसंपया [6]चउरो (२४) ॥५४४॥
सत्तीं पुरिसं [7]खित्तं वत्थुं नाउं [8]पउंजए वायं (२८) ।
गणजोग्गं संसत्तं सज्झाए सिक्खणं जाणे (३२) ॥५४५॥
[9]आयारे सुयविणए विक्खिवणे चेव होइ [10]बोधव्वा ।
[11]दोसस्स परीघाए विणए चउहेस पडिवत्ती (३६) ॥५४६॥
[12]सम्मत्त-नाण-चरणा पत्तेयं अट्ठअट्ठभेइल्ला ।
बारसभेओ य तवो सूरिगुणा हुंति छत्तीसं (२) ॥५४७॥

---

१ उस्सग्गो-ता. ॥ २ विन्नेया-ता ॥ ३ वयणेत्ति-मु. ॥ ४ जोग्गे-जे. । जोगे-ता. ॥ ५ ईह उवाया-ता. ॥
६ चउरोत्ति-मु. ॥ ७ खेत्तं-मु. ॥ ८ पओजए-मु. ॥ ९ तुलना-धर्मरत्नप्र. दे. टीका गाथा १२६ पृ २१०A ॥
१० बोधव्वे-ता ॥ ११ दोसस्य य निग्घाए इति धर्मरत्नप्र. दे.टी. गाथा १२६ पृ. २१० ॥ १२ अथवा सम्मत्त० ता. ॥

आयाराई अट्ठ उ तह चेव य दसविहो य ठियकप्पो ।
बारस तव छावस्सग सूरिगुणा हुंति छत्तीसं (३) ॥५४८॥
[तुलना—सम्बोध प्रकरण ३।९९-१००]

[1]'अट्ठविहे'त्यादिगाथानवकम् , गुणानां साधूनां वा गणः—समुदायो भूयानतिशयवान् वा यस्यास्ति स गणी-आचार्यस्तस्य सम्पत्—समृद्धिर्भावरूपा गणिसम्पत् , सा आचारादिभेदादष्टविधा, केवलमेकैकस्याश्चतुर्भेदत्वेन चतुर्भिर्गुणने द्वात्रिंशद्भेदाः, विनयश्चतुर्भेदस्तत्र प्रक्षिप्यते, तत एते गुरोः—आचार्यस्य षट्त्रिंशद् गुणा भवन्ति ॥ ५४० ॥

तत्राष्टौ सम्पद इमाः—'आयारे'त्यादि, आचारश्च श्रुतं च शरीरं चेत्येकवद्भावादाचार-श्रुत-शरीरम् , तथा वचनम् , प्राकृतत्वादेकारः, वाचना, मतिः, प्रयोगमतिः, एतेषु विषये सम्पत् , तथाहि—आचारसम्पत् १, श्रुतसम्पत् २, शरीरसम्पत् ३, वचनसम्पत् ४, वाचनासम्पत् ५, मतिसम्पत् ६, प्रयोगमतिसम्पत् ७, अष्टमी च संग्रहपरिज्ञासम्पत् ८ । तत्र आचरणमाचारः—अनुष्ठानं तद्विषया स एव वा सम्पद्—विभूतिस्तस्य वा सम्पत्—सम्पत्तिः प्राप्तिराचारसम्पत् , एवमग्रेऽपि व्युत्पत्त्यर्थो भावनीयः ॥५४१॥

सा चतुर्धा,यथा—'चरणयुतो मदरहितोऽनियतवृत्तिरचञ्चलश्चेति',तत्र चरणं-चारित्रं व्रत-श्रमणधर्मेत्यादि-सप्ततिस्थानस्वरूपं तेन युतो—युक्तश्चरणयुतः, [2]अन्यत्र तु 'संयमध्रुवयोगयुक्तते' त्येवमिदं पठ्यते, तत्राप्य-



१ 'अट्ठविहा गाहा'-सं ॥ २ तुलना- "संयमध्रुवयोगयुक्तता-चरणे नित्यं समाध्युपयुक्ततेत्यर्थः ।" इति धर्मरत्न-प्रकरणे टीका गाथा १२६, पृ.२६० ॥

यमेव परमार्थः, यतः संयमः—चारित्रं तस्मिन् ध्रुवः—नित्यो योगः—समाधिस्तेन युक्तता, तत्र सततोपयुक्ततेत्यर्थः, तथा मदैः—जाति-कुल-तपः-श्रुताद्युद्भवै रहितो मदरहितः, ग्रन्थान्तरे तु "[1]'असंपग्गह" इति पठ्यते, तत्रापि स एवार्थः, यतः समन्तात्प्रकर्षेण—जाति-श्रुत-तपोरूपादिप्रकृष्टतालक्षणेनात्मनो ग्रहणम्—अहमेव जातिमानित्यादिरूपेणावधारणं सम्प्रग्रहः,न तथा असम्प्रग्रहो जात्याद्यनुत्सिक्तत्वमित्यर्थः, अनियतवृत्तिः—ग्रामादिष्वनियतविहारस्वरूपता, तथाऽचञ्चलो—वशीकृतेन्द्रियः, [2]अन्यत्र तु 'वृद्धशीलता' इत्येवं पठ्यते, तत्र वृद्धशीलता—वपुषि मनसि च कामिनीमनोमोहने वयसि वर्तमानस्यापि निभृतस्वभावता निर्विकारतेतियावत् , यतः—"मनसि जरसाऽभिभूता जायन्ते यौवनेऽपि विद्वांसः । मूढधियः पुनरितरे भवन्ति वृद्धत्वभावेऽपि ॥ १ ॥"

तथा श्रुतसम्पच्चतुर्धा, यथा—तत्र 'सूचनात्सूत्र'मिति 'युगो'—युगप्रधानागमः, परिचितसूत्रः—क्रमोत्क्रमवाचनादिभिः स्थिरसूत्रः, 'उत्सर्गी'—उत्सर्गा-ऽपवाद-स्वसमय-परसमयादिवेदि, 'उदात्तघोषादि'—उदात्ता ऽनुदात्तादिस्वरविशुद्धिविधायी, [3]अन्यत्र बहुश्रुतता १, परिचितसूत्रता २, विचित्रसूत्रता ३, घोषविशुद्धिकरणता ४ चेति पठ्यते, अर्थस्तु स एव ॥ ५४२ ॥

शरीरसम्पदं चतुर्विधामाह—'चउ' इत्यादि, तत्र चतुरस्रः'—आरोह-परिणाहयुक्तो दैर्ध्य-विस्ताराभ्यां

१ असंप्रग्गह-सं. । "तुलना-असंप्रग्रह आत्मनोजात्याद्युत्सेकरूपामहवर्जनम् ।" इति धर्मरत्नप्र.दे.टी.गाथा२६ पृ.२६० ॥
२ तुलना-'वृद्धशीलता वपुर्मनसो निर्विकारता' । धर्मरत्न प्र. देवेन्दसूरिकृतटीका. पृ. २६० A ॥
३ तुलना-धर्मरत्नप्र. दे. टीका गाथा १२६ पृ. २६० A ॥

लक्षण-प्रमाणसहिताभ्यां युक्त इतियावत् , तथा 'अकुण्टादिः'—सम्पूर्णपाण्यादिः, तथा 'बधिरत्वादिवर्जितः—अविकलसकलेन्द्रियः, तथा दृढसंहननत्वेन बाह्या-ऽभ्यन्तरभेदभिन्ने तपसि शक्तः—समर्थः, [1]अन्यत्र तु आरोह-परिणाहयुक्तता १, [2]अनवत्राप्यता २, परिपूर्णेन्द्रियता ३, स्थिरसंहननता ४ चेति पठ्यते, तत्रापि स एवार्थः, केवलमविद्यमानमवत्राप्यम्—अवत्रपणं लज्जनं यस्य सोऽयमनवत्राप्यो यद्वा अवत्रापयितुं लज्जयितुमर्हः शक्यो वा अवत्राप्यो—लज्जनीयो न तथाऽनवत्राप्योऽहीनसर्वाङ्गत्वेनाऽलज्जाकर इत्यर्थः ।

वचनसम्पच्चतुर्धा, तद्यथा—'वाई'त्यादि, वादी मधुरवचनः अनिश्रितवचनः स्फुटवचनश्चेत्येषा 'वचने' वचनविषये सम्पत् , तत्र वदनं—वादः स प्रशस्तोऽतिशायी वा विद्यते यस्य स वादी आदेयवचन इत्यर्थः, तथा प्रकृष्टार्थप्रतिपादकमपरुषं सुस्वरता-गम्भीरतादिगुणोपेतमत एव श्रोतृजनमनःप्रीणकं वचनं यस्य स मधुरवचनः, तथा राग-द्वेषादिभिरनिश्रितम्—अकलुषं वचनं यस्य सोऽनिश्रितवचनः, स्फुटं—सर्वजनसुबोधं वचनं यस्य स स्फुटवचनः, [3]अन्यत्र तु आदेयवचनता १, मधुरवचनता २, अनिश्रितवचनता ३, असन्दिग्धवचनता ४ चेति पठ्यते, अर्थः प्राग्वदेव ॥५४३॥

अथ वाचनासम्पच्चतुर्धा, तद्यथा—'जोगो' इत्यादि, तत्र परिणामिकत्वादिगुणोपेतान् शिष्यान् विज्ञाय यस्य यद्योग्यं सूत्रं तत्तस्यैवोद्दिशन् समुद्दिशन् वा योग्यवाचनः, अपरिणामिकादावपक्वघटनिहितजलोदाहरणतो दोषसम्भवात् ; तथा पूर्वप्रदत्तसूत्रालापकान् शिष्यस्य सम्यक्परिणमय्य ततोऽपरा-ऽपरालापकानां

१ तुलना-धर्मरत्नप्र.दे टीका गाथा १२६ पृ. २६०B॥ २ "अनवत्रप्यता अलज्जनीयाङ्गता" । इति धर्मरत्नप्र.दे टीका गाथा १२६ पृ २६०B ।' ३ तुलना-धर्मरत्नप्र. दे.टीका गाथा १२६ पृ. २६०B ॥

वाचनां पुनः पुनः प्रयच्छन् परिणतवाचनः, तथा 'वाचनायाः'-व्याख्यानस्य 'निर्यापयिता'-निर्वाहकः, शिष्यसमुत्साहनेन झटित्येव ग्रन्थं समर्थयते न पुनरपान्तराले एवमेव मुञ्चतीत्यर्थः, तथा 'निर्वाहणो'-निर्वाहकोऽर्थस्येति शेषः, पूर्वा-ऽपरसाङ्गत्येन स्वयं ज्ञानतोऽन्येषां च कथनतः सम्यगर्थं निर्गमयतीति भावः, [1]ग्रन्थान्तरे त्वेवं दृश्यते-विदित्वोद्देशनम् १, विदित्वा समुद्देशनं-परिणामिकादिकं शिष्यं ज्ञात्वेत्यर्थः २, परिनिर्वाप्य वाचना- [2]पूर्वदत्तालपकानधिगमय्य शिष्यं पुनः सूत्रदानमित्यर्थः ३, [3]अर्थनिर्यापणा अर्थस्य पूर्वा-ऽपरसाङ्गत्येन गमनिकेत्यर्थः ४ ॥

अथ मतिसम्पच्चतुर्धा, तद्यथा-'उग्गहे'त्यादि, अवग्रहः, ईहा, अवायः, धारणा च, अवग्रहादीनां च स्वरूपं षोडशोत्तरद्विशततमद्वारे वक्ष्यते ॥५४४॥

तथा प्रयोगः-अत्र वादादिप्रयोजनसिद्धये[4] व्यापारः तत्काले मतिः-वस्तुपरिच्छित्तिः प्रयोगमतिः, तत्सम्पच्चतुर्धा, तद्यथा-'सत्ति' इत्यादि, शक्तिं पुरुषं क्षेत्रं वस्तु च ज्ञात्वा वादं प्रयुञ्जीत, तत्र [5]शक्तिज्ञानं वादादिव्यापारकाले किममुं वावदूकं वादिनं जेतुं मम शक्तिरस्ति न वेत्यात्मीयस्वरूपपर्यालोचनम्, [6]पुरुषज्ञानं किमयं प्रतिवादी पुरुषः सौगतः साङ्ख्यो वैशेषिकोऽन्यो वा, तथा प्रतिभादिमानितरो

१ तुलना-धर्मरत्नप्र.दे.टीका गाथा-१२६ पृ. २९० B ॥
२ पूर्वदत्ताकापका० मु. ॥ ३ 'अर्थनिर्वापणा'-इति धर्मरत्नप्र. दे.टीका गाथा १२६ पृ. २९० B ॥ ४ ०प्रयोजन सिद्धन्त सिद्धये-स. ॥ ५ शक्तेर्ज्ञानं-मु. ॥ ६ तुलना-धर्मरत्नप्र. दे.टीका गाथा १२६ पृ.२९०B ॥

वेत्यादिपरिभावनम्, क्षेत्रज्ञानं किमिदं क्षेत्रं मायाबहुलमन्यथा वा, तथा साधुभिर्भावितमभावितं वेत्यादिविमर्शनम्, वस्तुज्ञानं किमिदं राजामात्यादि सभासदादि वा वस्तु दारुणमदारुणं वा, भद्रकमभद्रकं वेत्यादिनिरूपणम्।

तथा [1]सङ्ग्रहः—स्वीकरणं तत्र परिज्ञानं नाम—अभिधानं सङ्ग्रहपरिज्ञा, तत्सम्पच्चतुर्धा, तद्यथा—'गणे'त्यादि, तत्र गणस्य—गच्छस्य बाल-दुर्बल-ग्लान-बहुयतिजनादिलक्षणस्य निर्वाहयोग्यक्षेत्रग्रहणं गणयोग्योपसङ्ग्रहसम्पत् प्रथमा १, तथा भद्रकादिपुरुषं प्रति तदनुरूपदेशनादिकरणेन संसक्तसम्पद् द्वितीया २, ग्रन्थान्तरे तु निषद्यादिमालिन्यपरिहाराय पीठ-फलकोपादानात्मिका द्वितीया सम्पदुक्ता, न चैतानि पीठादीनि न गृह्यन्ते. समये ग्र हितत्वात्, तथा च जीतकल्पे—

卐"पीढ-फलगाइगहणे न उ मइलिंती निसिज्जाई । वासासु विसेसेणं अन्नकालं तु गम्मएऽन्नत्थ ॥१॥ पाणा सीयल कुंथाइया य तो गहण वासासु।" तथा यथासमयमेव स्वाध्याय-प्रत्युपेक्षणा-भिक्षाटनोपधिसमुत्पादनात्मिका स्वाध्यायसम्पत्तृतीया, तथा गुरुप्रव्राजका-ऽध्यापक-रत्नाधिकप्रभृतीनामुपधिवहन-विश्रामणाऽ-भ्युत्थान-दण्डकोपादानादिशिक्षणात्मिका [2]शिक्षोपसङ्ग्रहसम्पच्चतुर्थी, इत्येवं चतुर्विधां संग्रहपरिज्ञासम्पदं जानीयात् । दर्शिता अष्टापि प्रत्येकं चतुर्विधा गणिसम्पदः ॥५४५॥

---

१ तुलना-"सङ्ग्रहः स्वीकरणम्, तत्र परिज्ञानमष्टमी सम्पत्, सा चतुर्धा, तथाहि पीठफलकादिविषया, बालादियोग्यक्षेत्रविषया, यथासमयं स्वाध्यायादिविषया, यथोचितविनयादिविषया चेति।" इति धर्मरत्न प्र.वे. टीका गाथा १२६ पृ २९० B ॥ 卐 पीठ-फलकादिग्रहणे नैव मलिन्यन्ते निषद्यादीनि। वर्षासु विशेषेण अन्यकाले तु गम्यतेऽन्यत्र ॥ १ ॥ प्राणाः शीतलं कुन्थ्वादिकाश्च ततो ग्रहणं वर्षासु ॥ २ शिष्योप० सं. ॥

इदानीं 'चतुर्विधं विनयमाह–' [2]'आये'त्यादि, आचारविनयः श्रुतविनयो विक्षेपणविनयो दोषपरिघातविनयश्चेति विनयविषये एषा चतुर्धा प्रतिपत्तिर्भवति, तत्र आचारो–व्रतिनां समाचारः स एव विनीयते–अपनीयते कर्मानेनेति [3]विनयः आचारविनयः, [4]स चतुर्धा, यथा–संयमसामाचारि, [5]तपःसामाचारि, गणसामाचारी, एकाकिविहारसामाचारि च ।

तत्र संयमं स्वयमाचरति परं च ग्राहयति तत्र च सीदन्तं स्थिरीकरोति तत्रोद्यतं चोपबृंहतीति संयमसामाचारी १, [6]पाक्षिकादिषु तपःकर्म स्वयं करोति परं च कारयति भिक्षाचर्यां स्वयमनुतिष्ठति परं च तस्यां नियुङ्क्ते इति तपःसामाचारी २, प्रत्युपेक्षणा-बालवृद्धादिवैयावृत्त्यादिकार्येषु स्वयमुद्यतोऽग्लान्या गणं प्रेरयतीति गणसामाचारी ३, एकाकिविहारप्रतिमांस्वयं प्रतिपद्यते परं च ग्राहयतीति एकाकिविहारसामाचारी ४ ।

[7]श्रुतविनयोऽपि चतुर्धा, सूत्रवाचनां ददाति १, अर्थं व्याख्यानयति २, हितं वाचयति, हितवाचना च तदैव भवति यदा सूत्रमर्थं तदुभयं च पारिणामिकादिगुणोपेतं शिष्यं परिभाव्य यद्यस्य योग्यं तत्तस्यैव ददाति ३, सूत्रमर्थं वा निःशेषं परिसमाप्तिं यावद्वाचयति नानवस्थिततयाऽपान्तरालेऽपि मुञ्चतीति ४ ।

१ चतुर्द्धा विनय० सं. ॥ २ आयार सुय विणए इत्यादि-सं. ॥ ३ विनयः स चतुर्धा जे. ॥
४ तुलना-धर्मरत्नप्र. टीका गाथा १२६ पृ. २६० ॥ ५ तपः समा. मु. ॥ ६ पक्षिका० सं. ॥ ७ तुलना-धर्मरत्नप्र. दे. टीका गाथा १२६ पृ-२६१ A ॥

विक्षिप्यते इति विक्षेपणं तदेव विनयो विक्षेपणविनयः, [1]स चतुर्धा, तत्र मिथ्यादृष्टिं मिथ्यामार्गाद्विक्षिप्य सम्यक्त्वमार्गे ग्राहयतीत्येकः १, सम्यग्दृष्टिं तु गृहस्थं गृहस्थभावाद्विक्षिप्य प्रव्राजयतीति द्वितीयः २, सम्यक्त्वाच्चारित्राद्वा च्युतं तद्भावाद्विक्षिप्य पुनस्तत्रैव व्यवस्थापयतीति तृतीयः ३, स्वयं च चारित्रधर्मस्य यथैवाभिवृद्धिस्तथैव प्रवर्तते अनेषणीयपरिभोगादित्यागेन एषणीयपरिभोगादिस्वीकारेण चेति चतुर्थः ४ ।

दोषाः—क्रोधादयस्तेषां परिघातो—निर्घातना स एव विनयो दोषपरिघातविनयः, [2]स चतुर्धा, क्रुद्धस्य देशनादिभिः क्रोधनिर्घातनमित्येकः १, कषाय-विषयादिभिर्दुष्टस्य तद्भावविनिवर्तनमिति द्वितीयः २, भक्त-पानादिविषयायाः परसमयविषयाया वा काङ्क्षाया निवर्तनमिति तृतीयः ३, स्वयं च क्रोधदोषकाङ्क्षारहितस्य सुप्रणिहितस्य प्रवर्तनमिति चतुर्थः ४ । तदेवमेते सर्वेऽपि षट्त्रिंशद्गुणा गुरोर्भवन्ति ॥५४६॥

अथवा इत्थं षट्त्रिंशद्गुणा गुरोर्भवन्ति, तत्राह—'**सम्मत्ते**'त्यादि, सम्यक्त्वस्य—दर्शनाचारस्य निःशङ्कितादयः, ज्ञानस्य—ज्ञानाचारस्य काल-विनयादयः, चरणस्य—चारित्राचारस्य ईर्यासमित्यादयः, प्रत्येकमष्टावष्टौ भेदा मिलिताश्चतुर्विंशतिः, तपसश्च बाह्याभ्यन्तरभेदभिन्नस्य प्रत्येकं षड्विधत्वेन अनशनादयो द्वादश भेदाः, सर्वमीलने च षट्त्रिंशद्भवन्ति ॥५४७॥

अथ भङ्ग्यन्तरेणापि गुरोः षट्त्रिंशद्गुणानाह—'**आयाराई**'त्यादि, आचाराः—श्रुतादयः प्राग्व्यावर्णितस्वरूपा अविवक्षितस्वस्वभेदा अष्टौ गणिसम्पदः, तथा—

"आचेलक्कु १ देसिय २ सिज्जायर ३ रायपिंड ४ किइकम्मे ५ । वय ६ जेट्ठ ७ पडिक्कमणे ८

१ तुलना-धर्मरत्नप्र-दे-टीका गाथा १२६ पृ-२९१ A ॥ २ तुलना-धर्मरत्नप्र. टीका गाथा १२६ पृ-२९१ A ॥

मासं ९ पज्जोसवणकप्पो १० ॥ १ ॥'' [तुलना—पञ्चवस्तु १५००, बृहत्कल्पभा. ६३६४, निशीथभा. ५९३३] इत्येवं वक्ष्यमाणस्वरूपो दशविधः स्थितकल्पः, तथा द्वादशविधं तपः प्रागुक्तस्वरूपम् , तथा षडावश्यकानि—सामायिक-चतुर्विंशतिस्तव-वन्दनक-प्रतिक्रमण-कायोत्सर्ग-प्रत्याख्यानलक्षणानि, एतानि सर्वाण्यपि मिलितानि षट्त्रिंशत्सूरिगुणा भवन्ति ।

इह चैवमन्या अपि [1]षट्त्रिंशिकाः सम्भवन्ति, तास्तु विस्तरभयान्नाभिधीयन्ते, केवलं किञ्चित्सोपयोगत्वात् सुप्रतीतत्वाच्च—

''[2]देस-कुल-जाइ-[3]रूवे [4]संघयणी धिइजुओ अणासंसी । [5]अविकत्थणो अमायी थिरपरिवाडी गहियवक्को ॥१॥
जियपरिसो जियनिद्दो मज्झत्थो देस-कालभावन्नू । आसन्नलद्धपइभो नाणाविहदेस[6]भासन्नू ॥२॥
पंचविहे आयारे जुत्तो सुत्तत्थ-तदुभयविहिन्नू । आहरण-हेउ-[7]उवनय-नयनिउणो गाहणाकुसलो ॥३॥
ससमय परसमयविऊ गंभीरो दित्तिमं सिवो सोमो । गुणसय[8]कलिओ जुत्तो [9]पवयणसारं परिकहेउं ॥४॥
[बृ. क. भा. २४१·४]

1 सम्बोधप्रकरणे(३।९०-१४३)४७ प्रकारैः षट्त्रिंशिकाः प्रदर्शिताः । गुरुगुणषट्त्रिंशद्षट्त्रिंशिकाकुलकम् अपि द्रष्टव्यम् ॥
2 इदं गाथाचतुष्टयं सम्बोधप्रकरणे (३।९४-९७) धर्मरत्नप्र. दे. टीकायाम् (गाथा १२६ पत्र २८९) अपि विद्यते ॥
3 ०रूवी-सम्बोधप्र. ३।९४, बृहत्कल्पभाष्य २४१, धर्मरत्नप्र. दे. टीका पत्र २८९ B ॥ 4 संघयणं-जे. । संघइणी-बृ क. भा. २४१ ॥ 5 अविकथणो-सम्बोधप्र. ३।९४, बृ.क.भा २४१ ॥ 6 ०भायन्नू-सं. ॥ 7 ०उवणय० सं. । कारण०-इति धर्मरत्नप्र. दे. टीका पृ. २८९ ॥ 8 ०कलिओ एसो प० मु. ॥ 9 पवयणउवएसओ सुगुरु-इति सम्बोधप्र. ३।९७ पाठः ॥

इति गाथाचतुष्टयभणिताः सूरिगुणाः षट्त्रिंशद्दर्यन्ते-तत्र युतशब्दः प्रत्येकमभिसम्बध्यते, देशयुतः कुलयुत इत्यादि, [1]तत्र यो मध्यदेशे जातो यो वाऽर्धषड्विंशतिषु जनपदेषु स देशयुतः, स ह्यार्यदेशभणितं जानाति ततः सुखेन तस्य समीपे शिष्याः सर्वेऽप्यधीयन्ते इति तदुपादानम् १, कुलं-पैतृकं तथा च [2]लोके व्यवहारः-ईक्ष्वाकुकुलजोऽयमित्यादि तेन युतः प्रतिपन्नार्थनिर्वाहको भवति २, जातिः-मातृकी, तया युतो विनयादिगुणवान् भवति ३, रूपयुतो लोकानां गुणविषयबहुमानभाग् जायते, 'यत्राकृतिस्तत्र गुणा वसन्ति' इति प्रवादात् , कुरूपस्य अनादेयत्वादिप्रसङ्गाच्च ४, संहननेन-विशिष्टशारीरसामर्थ्यरूपेण युतो व्याख्यायां न श्राम्यति ५, धृतिः-विशिष्टमानसावष्टम्भलक्षणा तया युतो नातिगहनेष्वप्यर्थेषु भ्रममुपयाति ६, 'अनाशंसी'-श्रोतृभ्यो वस्त्राद्यनाकाङ्क्षी ७, 'अविकत्थनः'-नातिबहुभाषी, यद्वा स्वल्पेऽपि केनचिदपराद्धे पुनः पुनस्तदुत्कीर्तनं विकत्थनं तद्रहितः ८, 'अमायी'-शाठ्यरहितः ९, स्थिरा-अतिशयेन निरन्तराभ्यासतः स्थैर्यमापन्ना अनुप्रयोगपरिपाट्यो यस्य स स्थिरपरिपाटिः, तस्य हि सूत्रमर्थो वा न मनागपि गलति १०, 'गृहीतवाक्यः'-उपादेयवचनः, तस्य हि स्वल्पमपि वचनं महार्थमिव प्रतिभाति ११, 'जितपर्षत्' न महत्यामपि पर्षदि क्षोभमुपयाति १२, 'जितनिद्रः' अल्पनिद्रः, स हि रात्रौ सूत्रमर्थं वा परिभावयन् न निद्रया बाध्यते १३, [3]मध्यस्थः-सर्वेषु शिष्येषु समचित्तः १४, देशं कालं च भावं जानातीति देश-कालभावज्ञः, स हि देशं कालं भावं च लोकानां ज्ञात्वा सुखेन विहरति, शिष्याणां वाऽभिप्रायान् ज्ञात्वा तान्

१ इत आरभ्य आद्वारं तुल्यप्रायं बृहत्कल्पटीका मलयगिरिसूरिविहिता पृ. ७५ तः ॥ २ लोकव्यवहार -मु. ॥
३ मध्यस्थः सत्वेषु समचित्ता-सं. ॥

सुखेनानुवर्तयति १५-१६-१७, आसन्ना-तत्क्षणादेव लब्धा कर्मक्षयोपशमेनाविर्भूता प्रतिभा-परितीर्थिकादीनामुत्तरप्रदानशक्तिर्यस्य स आसन्नलब्धप्रतिभः १८, नानाविधानां देशानां भाषां जानातीति नानाविधदेशभाषाज्ञः, स हि नानादेशीयान् शिष्यान् सुखेन शास्त्राणि ग्राहयति, तत्तद्देशजांश्च जनान् तत्तद्भाषया धर्ममार्गेऽवतारयति १९, पञ्चविध आचारो-ज्ञानाचारादिरूपस्तस्मिन् 'युक्तः' उद्युक्तः स्वयमाचारे[1]ष्वनवस्थितस्यान्यानाचारेषु प्रवर्तयितुमशक्यत्वात् २४, सूत्रार्थग्रहणेन चतुर्भङ्गी सूचिता, एकस्य सूत्रं नार्थः, द्वितीयस्यार्थो न सूत्रम्, तृतीयस्य सूत्रमप्यर्थोऽपि, चतुर्थस्य न सूत्रं नाप्यर्थः, तत्र तृतीयभङ्गग्रहणार्थं तदुभयग्रहणम्, ततः सूत्रा-ऽर्थतदुभयविधीन् जानातीति सूत्रा-ऽर्थतदुभयविधिज्ञः २५, आहरणं-दृष्टान्तः, [2]हेतुर्द्विविधः-कारको ज्ञापकश्च,तत्र कारको यथा घटस्य कर्ता कुम्भकारः, ज्ञापको यथा तमसि घटादीनामभिव्यञ्जकः प्रदीपः, उपनयः-उपसंहारो दृष्टान्तदृष्टस्यार्थस्य प्रकृते योजनमिति भावः, 'कारण' त्ति पाठे तु कारणं-निमित्तम्, नया-नैगमादयः, एतेषु निपुणः आहरण-हेतूपनय-नयनिपुणः, स हि श्रोतारमपेक्ष्य तत्प्रतिपत्त्यनुरोधतः क्वचिद् दृष्टान्तोपन्यासं क्वचिद्धेतूपन्यासं करोति २६-२७, उपसंहारनिपुणतया सम्यगधिकृतमर्थमुपसंहरति २८, नयनिपुणतया स सम्यगधिकृतनयवक्तव्यताऽवसरे सम्यक् सप्रपञ्चवैविक्त्येन नयानभिधत्ते २९, 'ग्राहणाकुशलः'-प्रतिपादनशक्तियुक्तः ३०, [3]स्वसमयं परसमयं च वेत्तीति स्वसमयपरसमयवत्, स हि परेणाक्षिप्तः सुखेन स्वपक्षं परपक्षं च निर्वाहयति ३१-३२, 'गम्भीरः'-अतुच्छस्वभावः

१ ष्ववस्थितस्याज्ञानाचारेषु-सं. ॥ २ "हेतुश्चतुर्विधो यापकादिः, यथा दशवैकालिकनिर्युक्तौ [१।८६]" इत्यधिकं बृहत्कल्पटीकायाम् पृ. ७५ ॥ ३ ससमय-जे. ॥

३३, 'दीप्तिमान्'-परवादिनामनुद्धर्षणीयः ३४; 'शिवः'-अकोपनो यदिवा यत्र तत्र वा विहरन् कल्याणकरः ३५; 'सोमः'-शान्तदृष्टिः ३६ इति षट्त्रिंशद्गुणोपेतो गुरुर्विज्ञेयः, उपलक्षणत्वाच्चामीषां गुणानामपरैरपि गुणैरौदार्यस्थैर्यादिभिः शशधरकरनिकरकमनीयैरलङ्कृतः प्रवचनोपदेशको गुरुर्भवति, तथा चाह-"गुणसय-[1]कलिओ जुत्तो पवयणसारं परिकहेउं"ति,यद्वा गुणा-मूलगुणा उत्तरगुणाश्च तेषां शतानि तैः कलितो गुण-शतकलितः 'युक्तः'-समीचीनः प्रवचनस्य-द्वादशांगस्य सारम्-अर्थं कथयितुम् , यदुक्तम्-

"[2]गुणसुट्ठियस्स वयणं घयपरिसित्तो व्व पावओ भाइ । गुणहीणस्स न सोहइ नेहविहूणो जह पईवो ॥१॥" [बृ.क.भा.२४५] ॥५४८॥ ॥६४॥

इदानीं 'विणओ [3]बावन्नभेयपडिभिन्नो' त्ति पञ्चषष्टं द्वारमाह—

**तित्थयर १ सिद्ध २ कुल ३ गण ४ संघ ५ किरिय ६ धम्म ७ नाण ८ नाणीणं ९ ।**
**आयरिय १० थेर ११ वज्झाय १२ गणीणं १३ तेरस पयाइं ॥५४९॥**
**अणसायणा १ य भत्ती २ बहुमाणो ३ तह य वण्णसंजलणा ४ ।**
**तित्थयराई तेरस चउग्गुणा हुंति बावण्णा ॥५५०॥** [दशवै.नि.३२५-६]

---

१ कलिय उजुत्तो-सं.॥ २ अस्य मलयगिरिसूरिकृता "व्याख्या-'यो मूलगुणादिषु गुणेषु सुस्थितस्तस्य वचनं घृतपरि-सिक्तपावक इव भाति' दीप्यते । गुणहीनस्य तु न शोभते वचनम् , यथा स्नेहविहीनः प्रदीपः । उक्तञ्च-आयारे वट्टंतो, आयारपरूवणा असंकंतो । आयारपरिब्भट्ठो, सुद्धचरणदेसणे भइओ ।।२४५।।बृ.क भा. टी. पृ. ७६ ॥
३ बावन्नविहिविहाणोपात्ति-ता. । तुलना-बावन्नविहिविहाणं वेंत अणासायणाविणयं ।।दशवै. नि. ३२४।। समवायाङ्ग-टीकायाम् (पृ १५B) षड्विधो अनाशातनाविनयः दर्शितः ॥

'तित्थे'त्यादिगाथाद्वयम्, 'तीर्थकरादिस्वरूपाणि तावत् त्रयोदश पदानि, तत्र तीर्थंकर-सिद्धौ प्रसिद्धौ, कुलं—नागेन्द्रकुलादि, गणः- कोटिकादिः, सङ्घः—प्रतीतः, क्रिया—अस्तिवादरूपा, [2]धर्मः— श्रमण-श्रावकधर्मादिः, ज्ञानं—मत्यादि, ज्ञानिनः—तद्वन्तः, आचार्यः—प्रतीतः, स्थविरः—सीदतां स्थिरीकरणहेतुः, उपाध्यायः—प्रसिद्धः, कियतोऽपि साधुसमुदायस्याधिपतिर्गणी ॥

यदि नामैतानि च त्रयोदश पदानि ततः किमित्याह— आशातना—जात्यादिहीलना तदभावोऽनाशातना तीर्थकरादीनां सदैव कर्तव्या, तथा भक्तिः—तेष्वेवोचितोपचाररूपा, तथा बहुमानः—तेष्वेवान्तरङ्गप्रतिबन्धविशेषः, तथा तेषामेव 'वर्णसञ्ज्वलना' वर्णः—कीर्तिस्तस्य सञ्ज्वलना—प्रकाशनम्, अनेन प्रकारेण तीर्थकरादयस्त्रयोदश चतुर्गुणा अनाशातनाद्युपाधिभेदेन द्विपञ्चाशद्विनयभेदा[3] भवन्तीति ॥५४९—५५० ॥६५॥ सम्प्रति 'चरणं' ति षट्षष्टं द्वारमाह—



**वय ५ समणधम्म १० संजम १७ वेयावच्चं १० च बंभगुत्तीओ ९ ।**
**नाणाइतियं ३ तव १२ कोहनिग्गहा ४ इइ चरणमेयं ७० ॥५५१॥** [तुलना—ओघनि.भाष्य. २]

**पाणिवह मुसावाए अदत्त मेहुण परिग्गहे चेव ।**
**एयाइं [4]हौंति पच [5]उ महव्वयाइं जईणं तु ॥५५२॥**

१ तुलना—दशवै.हारि.वृत्तिः २४२ A ॥ २ "धर्मः श्रुतधर्मादिः" इतिदशवै. हारि.वृत्तिः २४२A ॥ ३ नयरूपाभेदा-सं. ॥ ४ हुंति-ता. ॥ ५ वि-ता. ॥

खंती य मद्दवऽज्जव मुत्ती तव संजमे य बोद्धव्वे ।
सच्चं सोयं आकिंचणं च बंभं च जइधम्मो ॥५५३॥
[1]पंचासवा विरमणं पंचिंदियनिग्गहो कसायजओ ।
दंडत्तयस्स विरई सतरसहा संजमो होइ ॥५५४॥
[2]पुढवि १ दग २ अगणि ३ मारुय ४ वणस्सइ ५ बि ६ ति ७ चउ ८ पणिंदि ९ [3]अज्जीवे १० ।
पेहु ११ [4]प्पेह १२ पमज्जण १३ परिठवण १४ मणो १५ वई १६ काए १७ ॥५५५॥[दशवै. नि.४६]
आयरिय १ उवज्झाए २ तवस्सि ३ सेहे ४ गिलाण ५ [5]साहूसु ६ ।
समणोन्न ७ संघ ८ कुल ९ गण १० वेयाच्चं हवइ दसहा ॥५५६॥
वसहि १ कह २ निसिज्जिं ३ दिय ४ कुड्डंतर ५ पुव्वकीलिय ६ पणीए ७ ।
अइमायाहार ८ विभूसणाई ९ नव बंभगुत्तीओ ॥५५७॥
बारस अंगाईयं नाणं तत्तत्थसद्दहाणं तु ।
दंसणमेयं चरणं विरई देसे य सव्वे य ॥५५८॥

---

१ तुलना-'पञ्चास्रवाद्विरमणं पञ्चेन्द्रियनिग्रहश्च कषायजयः । दण्डत्रयविरतिश्चेति संयमः सप्तदशभेदः ॥" इति प्रशमरति प्र.१७२॥ २ तुलना-तत्त्वार्थसूत्रभाष्यं सिद्धसेनगणिटीका च ९।६ ॥ ओघनिर्युक्तिभाष्यम् १६९-१७० ॥ ३ अज्जीवा- मु. । अज्जीवे-इति दशवै.नि ४६, योगशास्त्रटीका ४-९३ ॥ ४ पेहु-ता. । प्पेहु-इति धर्मसङ्ग्रहवृत्तिः भा. २/पृ १२८ B ॥ ५ साहूसु-ता. । धर्मसङ्ग्रहवृत्तौ (भा. २/पृ. १२९) अपि साहूसु इति पाठः ॥

अणसणमूणोयरिया वित्तिसंखेवणं रसच्चाओ ।
कायकिलेसो संलीणया य बज्झो तवो होइ ॥५५९॥
पायच्छित्तं विणओ वेयावच्चं तहेव सज्झाओ ।
झाणं उस्सग्गोवि य अब्भिंतरओ तवो होइ ॥५६०॥ [दशवै. नि. ४७, ४८]
कोहो माणो माया लोभो [1]चउरो हवंति हु कसाया ।
एएसिं निग्गहणं चरणस्स हवंतिमे भेया ॥५६१॥

[2]'वयसमणे'त्यादिगाथादशकम्, [3]व्रतानि—प्राणातिपातविरमणादीनि *परिग्रहविरमणान्तानि * तथा श्रमणानां—साधूनां धर्मः श्रमणधर्मः—क्षान्तिमार्दवादिको दशभेदः, तथा सम्—एकीभावेन [4]यमः—संयमः उपरमः सप्तदशभेदः, तथा व्यापिपर्ति स्मेति व्यापृतस्तस्य भावो वैयावृत्त्यम् आचार्यादिभेदाद्दशप्रकारम्, तथा ब्रह्म—ब्रह्मचर्यम्, तस्य गुप्तयो ब्रह्मचर्यगुप्तयः, ताश्च वसत्यादिका नव, तथा ज्ञायतेऽनेनेति ज्ञानम्—आभिनिबोधिकादि तत् आदिर्यस्य तद् ज्ञानादि आदिशब्दात्सम्यग्दर्शन-चारित्रपरिग्रहः, ज्ञानादि च तत् त्रिकं च ज्ञानादित्रिकम्, तथा तपो—द्वादशप्रकारमनशनादि, तथा क्रोधस्य निग्रहः क्रोधनिग्रहः बहुवचनं माननिग्रहादिपरिग्रहार्थम्, इति—एवम्प्रकारम् एतच्चरणं [5]भवति, [6]'कोहनिग्गहाई चरणं' इति तु पाठे क्रोधनिग्रह आदिर्यस्य माननिग्रहादिकदम्बकस्य तत्क्रोधनिग्रहादि, एतच्चरणमवसेयमिति ।

१ चउरो वि हुंति चउभेया-ता. ॥ २ 'वये' त्यादि-मु. ॥ ३ तुलना—ओघनिर्युक्तिटीका पृ. ५ B तः ॥ * * चिह्नद्वयमध्यवर्तीपाठः जे.सं.नास्ति ॥ ४ यमः उपरमः संयमः सप्त० मु. ॥ ५ भवतीति-मु. ॥ ६ ओघनिर्युक्ति भाष्येऽपि (गाथा २, पृ. ५) 'कोहनिग्गहाई चरणं' इति पाठः ॥

इह सहृदयंमन्यः प्राह—ननु चतुर्थव्रतान्तर्गतत्वाद् गुप्तयो न पृथग्भणनीयाः, अथ परिकरभूताश्चतुर्थव्रतस्य ब्रह्मचर्यगुप्तयोऽभिधीयन्ते एवं तर्हि प्राणातिपातविरमणादेरेकैकस्य व्रतस्य परिकरभूता भावना अपि वाच्याः, गुप्तेर्भणने वा चतुर्थं व्रतं न भणनीयम्, तथा ज्ञानादित्रिकस्य ग्रहणं न करणीयम्, किन्तु ज्ञान-सम्यग्दर्शनयोरेवोपन्यासः कार्यः, चारित्रस्य व्रतग्रहणेनैव ग्रहणात्, तथा श्रमणधर्मग्रहणे संयमग्रहणं तपोग्रहणं चातिरिच्यते, संयम-तपसी वोद्धृत्य श्रमणधर्मोपन्यासः करणीयः, तथा तपोग्रहणे सति वैयावृत्त्यस्योपन्यासो निरर्थकः, वैयावृत्त्यस्य तपोऽन्तर्गतत्वात्, तथा क्षान्त्यादिधर्मग्रहणे सति क्रोधादिनिग्रहग्रहणमनर्थकमेव, तदियं गाथा परिभाव्यमाना आलूनविशीर्णेति।

[1]तत्रोच्यते, चतुरचक्रवर्तिभिर्यदेतदुच्यते—व्रतग्रहणे सति गुप्तयो न पृथग्वाच्या इति, तदयुक्तम्, चतुर्थव्रतस्य हि निरपवादत्वं दर्शयितुमेता ब्रह्मचर्यगुप्तयः पृथगुपात्ताः, यदुक्तमागमे—

△ [2]"नवि किंचि अणुन्नायं पडिसिद्धं वावि जिणवरिंदेहिं। मुत्तुं मेहुणभावं न विणा तं रागदोसेहिं॥१॥" इति

अथवा प्रथम-चरमतीर्थकरयोः परिग्रहव्रतात् भिन्नमेतन्महाव्रतं भवतीत्येतस्यार्थस्य ज्ञापनार्थं भेदेनोपन्यास इति, यच्चाभ्यधीयत—व्रतग्रहणे ज्ञानादित्रिकं न वक्तव्यम्, किन्तु ज्ञान-दर्शनद्वयमेव, चारित्रस्य व्रतग्रहणेनैव गतत्वादिति, तदयुक्तम्, यतो यदेतद् व्रतचारित्रं स एकांशः सामायिकादेः पञ्चविधस्य चारित्रस्य, चतुर्विधं चारित्रमद्याप्यगृहीत[3]मस्ति, तदर्थं ज्ञानादित्रयमुपन्यस्तम् इति, यच्चोक्तम्—श्रमणधर्म-

१ तुलना-धर्मसंग्रह भा-२-पृ- १३० A॥ △ नापि किञ्चिदनुज्ञातं प्रतिषिद्धं वापि जिनवरेन्द्रैः। मुक्त्वा मैथुनभावं न तद् विना राग-द्वेषाभ्याम्॥ २ उद्धृतमिदम् ओघनिर्युक्तिवृत्तौ पृ. ६॥ ३ ०मास्ते-सं.॥

ग्रहणे संयम-तपसोरुपादानं न विधेयम्, श्रमणधर्मग्रहणेनैव तयोर्गृहीतत्वात्, तदप्यसाधु, संयम-तपसोः प्रधानमोक्षाङ्गत्वेन पृथगुपादानात्, कथं मोक्षं प्रति प्रधानाङ्गत्वम् इति चेत्, तत्र ब्रूमः—अपूर्वकर्माश्रवसंवरहेतुः संयमः, पूर्वोपार्जितकर्मक्षयहेतुश्च तपः, ततः प्रधानत्वमनयोः, अतः श्रमणधर्मगृहीतयोरप्यनयोः प्रधानतया भेदेनोपन्यासः कृतः, दृष्टश्चायं न्यायो यथा ब्राह्मणा आयाता [1]वशिष्ठोऽप्यायातः, अत्र हि ब्राह्मणग्रहणेन [2]वशिष्ठस्यापि ग्रहणं कृतमेव तथापि प्रधानतया तस्य भेदेनोपन्यासः क्रियत इति, यच्चोक्तम्—तपोग्रहणेन वैयावृत्त्यस्यापि ग्रहणाद्भेदेन तदुपादानं न विधेयमिति, तदप्यचारु, वैयावृत्त्यस्य यथा स्वपरोपकारकारित्वेन प्राधान्यं न तथाऽनशनादीनां शेषतपोभेदानामिति ख्यापनार्थं तस्य भेदेनोपादानम्, यच्चाभिहितम्—श्रमणधर्मग्रहणेनैव गृहीतत्वात् क्रोधादिनिग्रहः पृथग् न वक्तव्य इति, तदप्यसाधीयः, यतो द्विविधाः क्रोधादयः—उदीर्णा अनुदीर्णाश्च, तत्रोदीर्णानां क्रोधादीनां निग्रहणं क्रोधादिनिग्रहः अनुदीर्णानां तु तेषामुदयनिरोधनं क्षान्त्यादय इति ज्ञापनार्थं पृथगुपादानम्, अथवा वस्तु त्रिविधं—ग्राह्यं हेयमुपेक्षणीयं च, तत्र क्षान्त्यादयो ग्राह्याः, क्रोधादयो हेयाः, अतो निग्रहीतव्यास्ते इत्येवमर्थमित्थमुपन्यासः, ततः सर्वमनवद्यमिति ॥५५१॥

एनां च गाथां स्वयमेव सूत्रकारः प्रत्यवयवं व्याख्यानयति[3] पाणिवहेत्यादि—'एकदेशेन समुदायोपचारात्' 'पाणिवह'त्ति प्राणिवधविरतिरिति द्रष्टव्यम्, एवं मृषावादादिष्वपि, तत्र प्राणिनां—त्रस-स्थावरजीवानाम् [4]अज्ञान १ संशय २ विपर्यय ३ राग ४ द्वेष ५ स्मृतिभ्रंश ६ योगदुष्प्रणिधान ७ धर्मानादर ८

१ वशिष्ठो० मु. ॥ २ वशिष्ठ० मु. ॥ ३ ०नयति एक० मु. ॥ ४ तुलना-योगशास्त्रटीका १।२०॥

रूपाष्टविधप्रमादयोगाद्वधो–हिंसनं प्राणिवधस्तस्माद्विरतिः–सम्यग्ज्ञानश्रद्धानपूर्विका निवृत्तिः प्रथमव्रतम्, मृषा–अलीकम् [1]वदनं–प्रिय पथ्य-तथ्यवचनपरिहारेण भाषणं मृषावादस्तस्माद्विरतिर्द्वितीयं व्रतम्, [2]तत्र प्रियं वचनं यत् श्रुतमात्रं प्रीणयति, पथ्यं–यदुत्तरकाले हितम्, तथ्यं–सत्यम्, तथ्यमपि व्यवहारापेक्षया यदप्रियम्, यथा चौरं प्रति चौरस्त्वं कुष्ठिनं प्रति कुष्ठी त्वमिति तदप्रियत्वान्न तथ्यम्, तथ्यमपि यदहितं यथा मृगयुभिः पृष्टस्यारण्ये मृगान् दृष्टवतो मया मृगा दृष्टा इति, तज्जन्तुजातघातपापनिमित्तत्वाद् न तथ्यमिति, अदत्तस्य–स्वामिनाऽवितीर्णस्यादानं–ग्रहणम् अदत्तादानम्, [3]तच्च स्वामि-जीव-तीर्थंकर गुर्वदत्तभेदेन चतुर्विधम्, तत्र स्वाम्यदत्तं–तृण-दारु-पाषाणादिकं तत्स्वामिना यददत्तम्, जीवादत्तं–यत्स्वामिना दत्तमपि जीवेनादत्तम्, यथा प्रव्रज्यापरिणामरहितो माता-पितृभ्यां पुत्रादिर्गुरुभ्यो दीयते सचित्तपृथ्वीकायादिर्वा, तद्धि तत्स्वामिना दत्तमपि तदधिष्ठायकजीवैरदत्तमिति, तीर्थंकरादत्तं–यत्तीर्थंकरैः प्रतिषिद्धमाधाकर्मादि गृह्यते, गुर्वदत्तं नाम स्वामिना दत्तमाधाकर्मादिदोषरहितं गुरूननुज्ञाप्य यद् गृह्यते, तस्माद्विरतिस्तृतीयं व्रतम्, मिथुनं–स्त्री–पुंसद्वन्द्वं तस्य कर्म मैथुनं तस्माद्विरतिश्चतुर्थं व्रतम्, परिगृह्यते–आदीयते असाविति ※परिग्रहः, ※ परिग्रहणं वा परिग्रहः, स च धन-धान्य-क्षेत्र-वास्तु-रूप्य-सुवर्ण-चतुष्पद-द्विपद-कुप्यभेदान्नवविधस्तस्माद्विरतिः- मूर्च्छापरिहारेण निवृत्तिः, 'मुच्छा परिग्गहो वुत्तो' इतिवचनात्, [4]न तु द्रव्यादित्यागमात्रम्, यस्मादविद्यमानेष्वपि द्रव्य-क्षेत्र-काल-भावेषु मूर्च्छया प्रशमसौख्यविपर्यासेन चित्त-

१ वचनं-सं. ॥ २ तुलना-योगशास्त्रटीका १।२१॥ धर्म संग्रहवृत्ति ३।४२॥ ३ तुलना-योगशास्त्रटीका १। २२॥
※ ※ चिह्नद्वयमध्यवर्तीपाठः सं. नास्ति ॥ ४ तुलना–योगशास्त्रटीका १। २४॥

विप्लवः स्यात् , सत्स्वपि च द्रव्यादिषु तृष्णात्यक्तमनसामसमप्रशमसुखसंप्राप्त्या चित्तविप्लवाभावः, अत एव धर्मोपकरणधारिणामपि मुनीनां शरीरे उपकरणे च निर्ममत्वानामपरिग्रहत्वम् , यदाहुरस्मद्गुरवः—"धर्मसाधननिमित्तमुक्तवद्वस्त्रपात्रमुपकारि धारयन् । देहवन्न हि परिग्रही यतिः, प्रेम नास्य यदि मूर्च्छया सह ॥१॥"

एतानि यतीनां भवन्ति पञ्चैव तुशब्दस्यैवकारार्थत्वान्न चत्वारि, प्रथम-पश्चिमतीर्थकृत्तीर्थयोः पञ्चानामेव भावात्, महान्ति—बृहन्ति तानि च व्रतानि च-नियमा महाव्रतानि, महत्त्वं चैषां सर्वजीवादिविषयत्वेन महाविषयत्वात् , उक्तं च—

△पढमंमि सव्वजीवा बीए चरिमे य सव्वदव्वाणि । सेसा महव्वया खलु तदेक्कदेसेण दव्वाणं ॥१॥" [आव. नि. ७६१] इति, तेषां—द्रव्याणामेकदेशेनेत्यर्थः ॥५५२॥

अथ श्रमणधर्ममाह 'खंतो' त्यादि, [2]क्षान्तिः—क्षमा शक्तस्याशक्तस्य वा सहनपरिणामः, सर्वथा क्रोधविवेक इत्यर्थः, मृदुः—अस्तब्धस्तस्य भावः कर्म वा मार्दवम् , नीचैर्वृत्तिरनुत्सेकश्च, ऋजुः—अवक्रमनोवाक्कायकर्मा तस्य भावः कर्म वा आर्जवं—मनोवाक्कायविक्रियाविरहः मायारहितत्वमितियावत् , मोचनं मुक्तिः—बाह्याऽभ्यन्तरवस्तुषु तृष्णाविच्छेदः लोभपरित्याग इत्यर्थः, तप्यन्ते रसादिधातवः कर्माणि वाऽनेनेति तपः, तच्च द्वादशविधमनशनादि, संयमः—आश्रवविरतिलक्षणः, सत्यं—मृषावादविरतिः, शौचं—संयमं प्रति निरुपलेपता, निरतीचारतेत्यर्थः, नास्य [3]किञ्चनद्रव्यमस्तीत्यकिञ्चनः तस्य भाव आकिञ्चन्यम् , उपलक्षणं

१ ०समशम० स ॥ △प्रथमे सर्वजीवा द्वितीये चरमे च सर्वद्रव्याणि । शेषाणि महाव्रतानि खलु तदेकदेशेन द्रव्याणा ॥ २ तुलना-योगशास्त्रटीका-४/९३, धर्मसङ्ग्रहवृत्तिः भा. २/पृ. १२८ A तः ॥ ३ किञ्चनं-मु. ॥

चैतत् तेन शरीरधर्मोपकरणादिष्वपि निर्ममत्वमाकिञ्चन्यम्, नवब्रह्मचर्यगुप्तिसनाथ उपस्थसंयमो ब्रह्म, एष दशप्रकारो यतिधर्मः, अन्ये त्वेवं पठन्ति—

"खंती मुत्ती अज्जव मद्दव तह लाघवे तवे चेव। संजम [1]चियागऽकिञ्चण बोद्धव्वे बंभचेरे य ॥१॥"

तत्र लाघवं द्रव्यतोऽल्पोपधिता भावतो गौरवपरिहारः, त्यागः—सर्वसङ्गानां विमोचनं संयतेभ्यो वस्त्रादिदानं वा, शेषं प्राग्वत् ॥५५३॥

अथ संयममाह—'पंचासवे'त्यादि, आश्रूयते—उपार्ज्यते कर्म एभिरित्याश्रवाः—अभिनवकर्मबन्धहेतवः प्राणातिपात मृषावादा-ऽदत्तादान-मैथुन-परिग्रहलक्षणाः पञ्च, तेभ्यो विरमणं—विनिवर्तनम्, इन्द्रियाणि—स्पर्शन रसन घ्राण-चक्षुः-श्रोत्रलक्षणानि पञ्च,तेषां निग्रहो—नियन्त्रणम्,स्पर्शादिषु विषयेषु लाम्पटयपरिहारेण वर्तनम्; कषायाः—क्रोध-मान-माया-लोभलक्षणाश्चत्वारस्तेषां जयः—अभिभवः, उदितानां विफलीकरणेन अनुदितानां चानुत्पादनेन, दण्ड्यते—चारित्रैश्वर्यापहारतोऽसारीक्रियते एभिरात्मेति दण्डा—दुष्प्रयुक्ता मनोवाक्कायास्तेषां त्रयं दण्डत्रयम्, तस्य विरतिः—अशुभप्रवृत्तिनिरोधः, एष सप्तदशविधः संयमो भवति ॥५५४॥

अथवाऽन्यथा सप्तदशविधः संयमो भवति—'पुढवी'त्यादि, [2]पृथिव्युदकाऽग्निमारुत-वनस्पति-द्वीन्द्रिय-त्रीन्द्रिय-चतुरिन्द्रिय-पञ्चेन्द्रियाणां मनो-वाक्कायकर्मभिः करण-कारणा-ऽनुमतिभिश्च संरम्भ-समारम्भाऽऽरम्भवर्जनमिति नवधा जीवसंयमः, तत्र—

१ चाओ-धर्मसङ्ग्रहवृत्तिः भा. २। पृ. १२८ ॥ २ सप्तदशसंयमानां, तुलना-योगशास्त्रटीका ४।९३ ॥

^"संकप्पो संरम्भो [2]परितावकरो भवे समारंभो। आरम्भो उद्दवओ सुद्धनयाणं तु सव्वेसिं॥१॥"

तथा अजीवरूपाण्यपि पुस्तकादीनि दुष्षमादिदोषात्तथाविधप्रज्ञा-ऽऽयुष्क-श्रद्धा-संवेगोद्यम-बलादिहीनाऽद्य-कालीनविनेयजनानुग्रहाय प्रतिलेखनाप्रमार्जनापूर्वं यतनया धारयतोऽजीवसंयमः, तथा प्रेक्ष्य—चक्षुषा निरीक्ष्य बीजहरितजन्तुसंसक्त्यादि [3]रहितं स्थानं तत्र शयना-ऽऽसन-चङ्क्रमणादीनि कुर्वीतेति प्रेक्षासंयमः, [4]तथोपेक्षासंयमो—गृहस्थस्य पापव्यापारं कुर्वत उपेक्षणं न पुनरिदं ग्रामचिन्तनादिकं सोपयोगः कुरु इत्याद्युपदेशनम्। अथवा साधूनां संयमं प्रति सीदतां प्रेरणं [5]प्रेक्षासंयमः, पार्श्वस्थादीनां च निर्द्धंधसानां व्यापारणं प्रत्युपेक्षणमुपेक्षासंयम इति। तथा प्रेक्षितेऽपि स्थण्डिले वस्त्र-पात्रादौ च रजोहरणादिना प्रमृज्य शयना-ऽऽसन निक्षेपा-ऽऽदानादि कुर्वतः कृष्णभूमप्रदेशात्पाण्डुभूमादौ प्रदेशे सागारिकाद्यनिरीक्षणे सचित्ता-ऽचित्त-मिश्ररजोऽवगुण्ठितपादादीनां रजोहरणेन प्रमार्जनं सागारिकादिनिरीक्षणे त्वप्रमार्जनं कुर्वतो वा [6]प्रमार्जनासंयमः, यदुक्तम्—

※"पायाई सागरिए अपमज्जित्तावि संजमो होइ। [7]ते चेव पमज्जंतेऽसागरिए संजमो होइ ॥१॥"

---

^ संकल्पः संरम्भः परितापकरो भवेत् समारम्भः। आरम्भः उपद्रवतः शुद्धनयानां च सर्वेषाम् ॥१॥

१ इयं गाथा आचाराङ्गटीकायाम् (पृ०३२५ A) उद्धृता, अत्रावपि १०६० क्रमाङ्के विद्यते ॥ २ परितातकरो–मु.॥ ३ ०रहितं (यत्)स्थानं–मु.॥ ४ तुलना-ओघनि.वृत्तिः पत्र ११४B ॥ ५ प्रेक्षासंयमः तथा उपेक्षा संयम पार्श्वस्थादीनां–जे.॥ ६ तुलना-ओघनि. वृत्तिः पत्र ११४ B ॥ ※ पादादीनप्रमार्जयतोऽपि सागारिके सति संयमो भवति। तानेवासागारिके प्रमार्जयतः संयमो भवति ॥१॥ ७ पायाइ–धर्मसङ्ग्रहवृत्तिः भा. २/पत्र १२८ ॥ इति।

तथा भक्त पानादिकं वस्त्र-पात्रादिकं च प्राणिसंसक्तमविशुद्धमनुपकारकं वा जन्तुरहिते स्थाने विधिना समयभणितेन परिष्ठापयतः परिष्ठापनासंयमः, तथा मनसो द्रोहेर्ष्याभिमानादिभ्यो निवृत्तिर्धर्मध्यानादिषु च प्रवृत्तिर्मनः-संयमः । तथा वाचो हिंस्रपरुषादिभ्यो निवृत्तिः शुभभाषायां च प्रवृत्तिर्वाक्संयमः, तथा गमना-ऽऽगमनादिष्ववश्यकरणीयेषु यदुपयुक्तः कायं व्यापारयति स कायसंयमः, इत्येवं सप्तदशप्रकारः प्राणातिपात निवृत्तिरूपः संयमो भवति ॥५५५॥

इदानीं वैयावृत्त्यमाह–'आयरिये'त्यादि, आचारे-ज्ञानाचारादिके पञ्चविधे साधव आचार्याः आचर्यन्ते–सेव्यन्ते इति वा आचार्याः उप-समीपमागत्य विनेयैरधीयते–पठ्यते येभ्यस्ते उपाध्यायाः, तपो विकृष्टाविकृष्टरूपं विद्यते येषां ते तपस्विनः, नवतरदीक्षिताः शिक्षार्हाः शैक्षाः, ग्लाना–ज्वरादिरोगाक्रान्ताः, साधवः स्थविराः, समनोज्ञा–एकसामाचारीसमाचरणपराः, सङ्घः–श्रमण-श्रमणी-श्रमणोपासक-श्रमणोपासिकासमुदायः [1]बहूनां गच्छानामेकजातीयानां समूहः कुलं–चान्द्रादि, गच्छस्त्वेकाचार्यप्रणेयः साधुसमूहः, कुलसमुदायो [2]गणः–कोटिकादिः, एषामेवाचार्यादीनामन्न पान-वस्त्र पात्र-प्रतिश्रय-पीठ-फलक-संस्तारकादिभिर्धर्मसाधनैरुपग्रहः शुश्रूषाभेषजक्रियाकान्तारारोगोपसर्गेषु परिपालनमेवमादि वैयावृत्त्यम् ॥५५६॥

अथ ब्रह्मगुप्तीराह–'वसही'त्यादि, ब्रह्मचारिणा स्त्री पशु-पण्डकविवर्जिता वसतिरासेवनीया, तत्र [3]स्त्रियो देव-मानुषभेदात् द्विविधाः, एताश्च सचित्ताः, अचित्तास्तु पुस्त-लेप्य-चित्रकर्मादिनिर्मिताः,



१ तुलना-योगशास्त्रटीका (४/९०) पृ. ३१४। तत्त्वार्थ-सिद्धसेनीयावृत्ति. भा २। पृ. २५७॥ २ "गणः स्थविरसन्तति-संस्थितिः।" इति तत्त्वार्थभाष्यम् ९-२४। 'गणः स्थविरसन्ततिः"। इति तत्त्वार्थ राजवार्तिकम् पृ ६२३॥
३ तुलना–तत्त्वार्थ॰सिद्ध॰ ७/३, योगशास्त्रटीका १। ३०-१, धर्मसङ्ग्रहवृत्तिः भा.२/पृ. १२६ B॥

पशवः-तिर्यग्योनिजाः, तत्र गो-महिषी-वडवा-वालेयादयः सम्भाव्यमानमैथुनाः, पण्डकाः–तृतीयवेदोदय-वर्तिनो महामोहकर्माणः स्त्री-पुंसेवनाभिरताः, तत्संसक्तौ हि तत्कृतविकारदर्शनान्मनोविकारसद्भावेन ब्रह्मचर्यबाधासम्भवात् १। तथा स्त्रीणां केवलानामेकाकिना कथा–धर्मदेशनादिलक्षणवाक्यप्रबन्धरूपा न कथनीया, यदिवा स्त्रीणां सम्बन्धिनी कथा, यथा–'कर्णाटी सुरतोपचारचतुरा, लाटी विदग्धप्रिया' इत्यादिरूपा न कर्तव्या, रागानुबन्धिनी हि देश-जाति-कुल नेपथ्य-भाषा-गति-विभ्रम-गीत-हास्य-लीला-कटाक्ष-प्रणय कलह-शृङ्गाररसानुविद्धा कामिनीनां कथा अवश्यमिह मुनीनामपि मनो विक्रियां नयतीति २। [1]तथा निषद्या-आसनम्, कोऽर्थः ? – स्त्रीभिः सहैकासने नोपविशेत्, उत्थितास्वपि तासु मुहूर्तं तत्र नोपविशेत्, तदुपभुक्तासनस्य चित्तविकारकारणत्वात्, यदाह—

△"इत्थीए मलिय सयणासणंमि तप्फासदोसओ जइणो। दूसेइ मणं मयणो कुट्ठं जह फासदोसेणं ॥१॥३।

तथा [2]अविवेकिजनापेक्षया स्पृहणीयानि स्त्रीणामिन्द्रियाणि–नयन-नासिका-मुख-कर्ण-देहादीनि उपलक्षणत्वादङ्गानि च–स्तन-जघनादीनि अपूर्वविस्मयरसनिर्भरतया विस्फारितलोचनो न विलोकयेत्, न च विलोकनानन्तरमहो सलवणत्वं लोचनयोः, सरलत्वं नाशावंशस्य, स्पृहणीयत्वं पयोधरयोरित्यादि

---

१ तुलना-धर्मसङ्ग्रहवृत्तिः भा.२/पृ.१२६B। इतोऽग्रे "स्त्रीणा च पुरुषासने यामत्रयं नोपवेष्टव्यम्, यतः–पुरिसासणे तु इत्थी, जामतिअं जाव नो व उववसिइ। इत्थीइ आसणंमी, वज्जेअव्वा नरेण दो घडिआ"॥ इत्यधिक धर्मसङ्ग्रहवृत्तौ भा. २ पृ. १२९B॥ △ स्त्रिया परिषेविते शयनासने तत्स्पर्शदोषतो यतेर्मनो मदनो दूषयति यथा कुष्ठं स्पर्शदोषेण॥१॥ २ तुलना-योगशास्त्रटीका १। ३०-३१ पृ. १२६॥

तदेकाग्रचित्तश्चिन्तयेत्, तदवलोकनतच्चिन्तनयोर्मोहोदयहेतुत्वात् ४ । तथा कुड्यान्तरं—यत्रान्तरस्थेऽपि कुड्यादौ दम्पत्योः सुरतादिशब्दः श्रूयते ब्रह्मचर्यभङ्गभयाच्च तत्परित्यागः ५ । तथा [1]पूर्वं—गृहस्थावस्थायां क्रीडितं-स्त्रीसम्भोगानुभवलक्षणं द्यूतादिरमणलक्षणं वा नानुस्मरेत्, तत्स्मरणेन्धनक्षेपात्स्मराग्निः संधुक्ष्यते ६ । तथा प्रणीतम्—अतिस्निग्धमधुरादिरसं भक्तं न भुञ्जीत, [2]निरन्तरं वृष्य-स्निग्धरसप्रीणितो हि प्रधान-धातुपरिपोषेण वेदोदयादब्रह्मापि सेवते ७ । तथा रूक्षभैक्ष्यस्याप्यतिमात्रमाहारम्—आकण्ठमुदरपूरणं वर्जयेत्, ब्रह्मक्षतिकारित्वात् शरीरपीडाकारित्वाच्च ८ । तथा विभूषणा— [3]स्नान-विलेपन-[4]धूपन-नख-दन्त-केशसंमार्जनादिः स्वशरीरस्य संस्कारस्तां न कुर्यात्, अशुचिशरीरसंस्कारमूढो हि तत्तदुत्कलिकामयैर्विकल्पैर्वृथाऽऽत्मानमायासयतीति ९ । एता ब्रह्मचर्यस्य—मैथुनव्रतस्य गुप्तयः—परिरक्षणोपाया ब्रह्मचर्य-गुप्तयो नव भवन्ति ॥५५७॥

अथ ज्ञानादित्रिकमाह-'बारसे'त्यादि, ज्ञानं—कर्मक्षयोपशमसमुत्थोऽवबोधः, तद्धेतुत्वाद् द्वादशाङ्गादिकमपि ज्ञानम्, आदिशब्दादुपाङ्गप्रकीर्णादिपरिग्रहः । तथा तत्त्वानि—जीवा-ऽजीवा-ऽऽश्रव-संवर निर्जरा-बन्ध-मोक्षलक्षणानि, तेषामर्थः-अभिधेयम्, तस्य श्रद्धानं— तथेतिप्रत्ययरूपा रुचिरेतद्दर्शनम् । तथा सर्वेभ्यः पापव्यापारेभ्यो विरतिः—ज्ञान-श्रद्धानपूर्वकं परिहारश्चरणम्, तच्च द्विविधं—देशतः सर्वतश्च, तत्र देशतः श्राद्धानाम्, सर्वतः साधूनामिति ॥५५८॥



१ तुलना-योगशास्त्रटीका १।३०-३१, पृ-१२६ ॥ २ तुलना-योगशास्त्रटीका १/३०-३१ । पृ. १२६ ॥
३ तुलना-योगशास्त्रटीका १ । ३०-३१, पृ. १२६। ४ ०धूपनख० सं. ॥

अथ द्वादशप्रकारं तप आह–'अणसण' [1]मित्यादि, 'पायच्छित्त'मित्यादि, गाथाद्वयम्, एतत्स्वरूपं च तपोऽतिचारव्याख्यायां पूर्वमेव व्याख्यातम्, न पुनरिहोच्यते ॥५५९-५६०॥

अथ क्रोधनिग्रहादीनाह–'कोहो' इत्यादि, क्रोधो मानो माया लोभश्चत्वारो [2]भवन्ति कषायाः, कष्यन्ते–हिंस्यन्ते प्राणिनो यत्रासौ कषः–संसारस्तमेति–प्राप्नोति प्राणी यैस्ते कषायास्तेषां निग्रहणं–नियन्त्रणम् इति, चरणस्य–चारित्रस्यैते–पूर्वोक्ता भेदाः सप्ततिसङ्ख्या भवन्ति ॥

व्रतानां पञ्चके श्रमणधर्मस्य दशके संयमसम्बन्धिनि सप्तदशके वैयावृत्त्यदशके ब्रह्मगुप्तिनवके ज्ञानादीनां त्रिके तपसो द्वादशके क्रोधनिग्रहादीनां च चतुष्के मिलिते एतत्संख्यासम्भवादिति ॥५६१॥६६॥

इदानीं 'करण' ति सप्तषष्टं द्वारमाह—

**पिंडविसोही ४ समिई ५ भावण १२ पडिमा १२ य इंदियनिरोहो**
**५ पडिलेहण २५ गुत्तीओ ३ अभिग्गहा ४ चेव करणं तु ७० ॥५६२॥** [ओघनि. भा. ३]

[3]'**पिंडविसोही**'इत्यादिगाथा, 'पिडि सङ्घाते' इत्यस्य 'इदितो नुम् धातोः' (पा० ७-१-५८) इति नुमि कृते पिण्डनं पिण्डः–सङ्घातः, बहूनां सजातीयानां विजातीयानां वा कठिनद्रव्याणामेकत्र समुदाय इत्यर्थः, समुदायश्च समुदायिभ्यः कथञ्चिदभिन्न इति त एव बहवः पदार्था एकत्र संश्लिष्टाः पिण्डशब्देनोच्यन्ते, तस्य विविधम्–अनेकैराधाकर्मादिपरिहारप्रकारैः शुद्धिः–निर्दोषता पिण्डविशुद्धिः । सं–सम्यक्

१ मित्यादि गाथाद्वयं-सं. ॥ २ भवन्ति कष्यन्ते-जे.॥ ३ पिंडेत्यादि-मु. ॥

प्रशस्ता अर्हत्प्रवचनानुसारेण, इतिः—चेष्टा, समितिः—ईर्यासमित्यादिका। भाव्यन्ते इति भावनाः—अनुप्रेक्षा अनित्यत्वादिकाः। प्रतिमाः—प्रतिज्ञा अभिग्रहप्रकारा मासिक्यादयः। इन्द्रियाणि—स्पर्शनादीनि तेषां निरोधः आत्मीयात्मीयेष्टानिष्टविषयरागद्वेषाभाव इत्यर्थः। प्रतिलेखनं प्रतिलेखना—आगमानुसारेण प्रति प्रति निरीक्षणमनुष्ठानं वा, सा च चोलपट्टादेरुपकरणस्य। गुप्तिः—गोपनमात्मसंरक्षणम्, मुमुक्षोर्योगनिग्रह इत्यर्थः। अभिगृह्यन्त इत्यभिग्रहाः—नियमविशेषा द्रव्यादिभिरनेकप्रकाराः। चः समुच्चये, एवकारः क्रमप्रतिपादनार्थः, एतत्करणं भवतीति, क्रियत इति करणम्, मोक्षार्थिभिः साधुभिर्निष्पाद्यत इत्यर्थः, तुशब्दो विशेषेण मूलगुणसद्भावे करणत्वमस्य नान्यथेति [दर्शनाय]।

अत्राह परः—ननु समितिग्रहणेनैव पिण्डविशुद्धेर्गृहीतत्वान्न पिण्डविशुद्धिग्रहणं कर्तव्यम्, यत एषणासमितौ सर्वाऽप्येषणा गृहीता, पिण्डविशुद्धिरप्येषणैव, तत्किं भेदेनोपन्यासः? इति, अत्रोच्यते, [1]पिण्डद्रव्यव्यतिरेकेणाप्येषणा विद्यते [2]वसत्यादिरूपा, तद्ग्रहणार्थमेषणासमितिग्रहणं भविष्यतीति, पिण्डविशुद्धेस्तु भेदेनोपन्यासः कारणे ग्रहणं कर्तव्यं नाकारणे इत्यस्यार्थस्य ज्ञापनार्थः, अथवा आहारमन्तरेण न शक्यते पिण्डविशुद्ध्यादिकरणं सर्वमेव कर्तुमतो भेदेनोपन्यास इति ॥५६२॥

तत्र स्वयमेवैनां गाथां प्रतिपदं व्याख्यानयन् यैर्दोषै रहितस्य पिण्डस्य विशुद्धिर्भवति तान् दोषान् सामान्येन त्रिभेदानाह—



१ पिण्ड० व्यति० सं. ॥ २ वसत्यादिरूपेण-जे. ॥

[1]सोलस उग्गमदोसा सोलस [2]उपायणाय दोसत्ति ।
दस [3]एसणाय दोसा बायालीसं इइ हवन्ति ॥५६३॥ [पञ्चाशकप्र. १३/३]
[4]आहाकम्मु १ देसिय २ पूईकम्मे ३ य मीसजाए य ४ ।
ठवणा ५ पाहुडियाए ६ पाओयर ७ कीय ८ पामिच्चे ९ ॥५६४॥
परियट्टिए १० अभिहडु ११ भिन्ने १२ मालोहडे १३ [5]य अच्छिज्जे १४ ।
अणिसिट्ठे १५ ऽज्झोयरए १६ सोलस पिण्डुग्गमे दोसा ॥५६५॥ [पिण्डविशुद्धिः ३,४]

[6]'सोलसे' त्यादि, षोडश उद्गमदोषाः, उद्गमनमुद्गमः-पिण्डस्योत्पत्तिः, तद्विषया आधाकर्मिकादयो दोषा उद्गमदोषाः, तथा षोडश उत्पादनादोषाः, उत्पादनम् उत्पादना—मूलतः शुद्धस्यापि पिण्डस्य धात्रीत्वादिभिः प्रकारैरुपार्जनम्, तद्विषया दोषा उत्पादनादोषाः । तथा दश एषणादोषाः, एषणमेषणा—अशनादेर्ग्रहणकाले शङ्कितादिभिः प्रकारैरन्वेषणम् तद्विषया दोषा एषणादोषाः । एते चेह त्रयोऽपि मिलिता द्विचत्वारिंशद्भवन्ति ॥५६३॥

१ इतः पूर्वं ता॰ प्रतौ "पिंड सिज्जं च वत्थं च चउत्थं पाय मेवय । अकप्पियं न इच्छिज्जा पडिगाहिज्ज कप्पियं" [दशवै॰ ६/४७] इत्यधिका गाथा विद्यते । तुलना—पिण्डनि॰ ६६९ ॥
२ 'उप्पायणाए' इति पञ्चाशके (१३/३) पाठः । उत्पादनायामपि तस्या वा—इति तत्रैव वृत्तौ पाठः । पिण्डनि॰ ६६९ द्रष्टव्या ॥ ३ एसणाए—इति पञ्चाशके (१३/३) पाठः॥ तुलना—सटीकपञ्चाशकप्र॰ १३/७ ॥
४ तुलना-पिण्डनिर्युक्तिः ९२, ९३, पञ्चाशकप्र॰ १३/५,६ ॥
५ य इय अच्छिज्जे—जे॰ ता. ॥ ६ 'सोलसे' त्यादि-मु. नास्ति ॥

तत्र तावदुद्गमविषयान् षोडश दोषान्नामग्राहमाह—'आहाकम्मे' त्यादिगाथाद्वयम् , आधाकर्मादयो-ऽध्यवपूरकान्ताः षोडश पिण्डोद्गमविषया दोषा भवन्तीतिगाथाद्वयस्य परमार्थः । तत्र 'आहाकम्मं' ति 'आधानमाधा—साधुनिमित्तं चेतसः प्रणिधानम् यथा अमुकस्य साधोः कारणेन मया भक्तादि पचनीयमिति । आधया कर्म—पाकादिक्रिया आधाकर्म तद्योगाद्भक्ताद्यप्याधाकर्म । इह दोषाभिधानप्रक्रमेऽपि यद्दोषवतो भक्तादेरभिधानं तद्दोष-दोषवतोरभेदविवक्षया द्रष्टव्यम्, एवमन्यत्रापि । यद्वा आधाय—साधुं चेतसि प्रणिधाय यत् क्रियते भक्तादि तदाधाकर्म, पृषोदरादित्वाद्यलोपः, साधुनिमित्तं सचित्तस्याचित्तीकरण[2]मचित्तस्य वा पाक इति भावः १ ।

'उद्देसिय' त्ति [3]उद्देशनमुद्देशो—यावदर्थिकादिप्रणिधानं तेन निर्वृत्तं तत्प्रयोजनं वा औद्देशिकम् । तद् [4]द्विविधम्—ओघेन विभागेन च । तत्र ओघः—सामान्यम् , विभागः—पृथक्करणम् , इयमत्र भावना—यन्निजनिमित्तं निष्पन्नादन्नादत्तमिह किमपि लभ्यते, ततः कतिपया भिक्षा दद्म इति बुद्ध्या कतिपयाधिकतण्डुलप्रक्षेपेण यन्निर्वृत्तमशनादि तदोघौद्देशिकम् ओघेन—सामान्येन स्व—परपृथग्विभागकरणाभावरूपेण औद्देशिकमोघौद्देशिकमिति व्युत्पत्तेः । तथा विवाहप्रकरणादिषु यदुद्धरितं तत्पृथक्कृत्वा दानाय कल्पितं सद्विभागौद्देशिकम्, विभागेन—स्वसत्ताया उत्तार्य पृथक्करणेनोद्देशिकं विभागौद्देशिकमिति व्युत्पत्तेः । [5]तत्रौघौद्देशिकमेवं

६७ द्वारे
१६उद्गम-
दोषाः
गाथा
५६३-
५६५
प्र.आ.
१३७



१ तुलना-पिण्डनिर्युक्तिवृत्तिः पृ. ३५A ॥ २ ०मचित्तस्य अचित्तीकरणमचीत्तस्य व पाकः-सं. ॥
३ तुलना-पिण्डनि. वृत्तिः पृ. ३५ A ॥ ४ तुलना-पिण्डनिर्युक्तिवृत्तिः पृ. ७७ A ॥
५ तुलना-सटीका पिण्डनिर्युक्तिः गाथा २२०-१, पृ.७७ B । पञ्चाशकटीका १३ / ८ ॥

प्रायेण भवति–इह कश्चिदनुभूतदुर्भिक्षबुभुक्षः सम्प्राप्तसुभिक्षो गृहस्थश्चिन्तयति, यथा–जीवितास्तावद्वयं कथमपि महाकष्टेनास्मिन् दुर्भिक्षे, इदानीं किमपि सम्प्राप्तवर्तनस्य प्रतिदिनमर्थिजनसम्पूर्णभोजनदानशक्त्यभावे मम भिक्षा अपि तावत्कियत्योऽपि दातुं युक्ताः, यतो नादत्तमिह जन्मन्यमुत्र च स्वर्गाद्यवाप्त्योपभुज्यते, दत्तस्यैव भोगात्, नाप्यकृतं पुण्यं स्वर्गगमनाद्यवाप्तये सम्पद्यते, कृतस्यैव फलदानसमर्थत्वादिति, ततः पुण्योपार्जनबुद्ध्या यदा गृहिणा प्रतिदिवसं यावत्प्रमाणं भक्तं पच्यते तावत्प्रमाणे एव भक्ते पक्तुमारभ्यमाणे पाखण्डिनां गृहिणां वा मध्ये यः कोऽपि समागमिष्यति तस्य भिक्षादानार्थमेतावत् स्वार्थमेतावच्च भिक्षादानार्थमित्येवं विभागरहितमेव तण्डुलानधिकतरान् प्रक्षिपति तदा ओघौद्देशिकं भवति। विभागौद्देशिकं पुनः प्रथमं तावत् त्रिधा–उद्दिष्टं कृतं कर्म च, [1]तत्र स्वार्थमेव निष्पन्नमशनादिकं भिक्षाचराणां दानाय यत्पृथक्कल्पितं तदुद्दिष्टम्, यत्पुनरुद्धरितं सत् शाल्योदनादिकं भिक्षादानाय करम्बादिरूपतया कृतं तत्कृतमित्युच्यते। यत्पुनर्विवाहप्रकरणादावुद्धरितं मोदकचूर्णादि तद्भूयोऽपि भिक्षाचराणां दानाय गुडपाकदानादिना मोदकादिरूपतया कृतं तत्कर्मेत्यभिधीयते। एकैकमपि पुनश्चतुर्धा–उद्देश-समुद्देशाऽऽदेश-समादेशभेदात्। [2]तत्र यदुद्दिष्टं कृतं कर्म वा विभागौद्देशिकं यावन्तः केऽपि भिक्षाचराः पाखण्डिनो गृहस्था वा समागमिष्यन्ति तेभ्यः सर्वेभ्योऽपि दातव्यमिति यदा सङ्कल्पितं भवति तदा तदुद्देशसंज्ञमुच्यते। यदा पुनः पाखण्डिनां देयत्वेन कल्पयति तदा तत् समुद्देशाख्यम्। यदा श्रमणानां शाक्यादीनां दास्या-

१ तुलना पिण्डनिर्युक्तिवृत्तिः पृ ७६॥ २ तुलना-पिण्डनिर्युक्तिवृत्तिः पृ. ७६। पिण्डविशुद्धिः गाथा ३०॥

मीति चिन्तयति तदा तदेवादेशाभिधम् यदा च निर्ग्रन्थानामेव—आर्हतयतीनां दास्यामीति परामृशति तदा तत् समादेशनामकम्। न चैनदनार्षम्, यत उक्तम्—

△" [1]जावंतियमुद्देसं पासंडिणं भवे समुद्देसं। समणाणं आएसं निग्गंथाणं समाएसं [पिण्डनिर्युक्ति-२३०] ॥१॥" इति। सर्वसङ्ख्यया विभागौद्देशिकं द्वादशप्रकारं भवति। अथ आधाकर्म-कर्मौद्देशिकयोः कः परस्परं प्रतिविशेषः ?, उच्यते, यत्प्रथमत एव साध्वर्थं निष्पादितं न स्वार्थं तदाधाकर्म, यत्पुनः प्रथमतः स्वार्थं निष्पादितं सत् भूयोऽपि पाककरणेन संस्क्रियते तत्कर्मौद्देशिकमिति २।

'पूई–कम्मे य' त्ति [2]उद्गमादिदोपरहिततया पूतेः–पवित्रस्य सतो भक्तादेरन्यस्याविशुद्धकोटिकभक्तादेरवयवेन सह सम्पर्कात् [3]पूतेः–पूतिभूतस्य कर्म–करणं पूतिकर्म। तद्योगाद्भक्ताद्यपि पूतिकर्म। अयमर्थः–यथा [4]सौरभ्यमनोहरत्वादिगुणैर्विशिष्टमपि शाल्यादिभोजनद्रव्यं कुथितगन्धा-ऽशुच्यादिद्रव्यलवेनापि युक्तमपवित्रं स्याद्विशिष्टजनपरिहार्यं च [5]तथा निरतिचारचारित्रिणो यतेर्निरतिचारचारित्रस्य सातिचारतयाऽपवित्रत्वकरणेनाविशोधिकोटीनामवयवमात्रेणापि संयुक्तः स्वरूपतः परिशुद्धोऽप्याहार उपभुज्यमानो भावपूतेः कारणत्वात् पूतिरिति। तथा आधाकर्मिकाद्यवयवलेशेनापि संश्लिष्टाः स्थालीचट्टुककरोटिकादयोऽपि पूतित्वात्परिहर्तव्याः ३।

---

△ यावतामुद्देशं पाखण्डिनां समुद्देशं भवेत्। श्रमणानामादेशं निर्ग्रन्थानां समादेशम् ॥१॥ १ यावंतिय० सं. ॥
२ तुलना–पिण्डनि. टीका पृ. ३५ A। "पूतिकर्म सम्भाव्यमानाधाकर्मावयवसंमीश्रलक्षणम्।" दशवै. हा.टी.पृ. १७४ ॥
३ पूते. कर्म–सं. ॥ ४ द्रष्टव्या-सटीका पिण्डनिर्युक्तिः गाथा २४४॥ ५ द्रष्टव्या-सटीका पिण्डनिर्युक्तिः गाथा २४७ ॥

गाथा
५६३-
५६५
प्र.आ.१३८

'मिसजाए य' त्ति [1]मिश्रेण-कुटुम्बप्रणिधान-साधुप्रणिधानमीलनरूपेण भावेन जातं-पाकादि-भावमापन्नं यद्भक्तादि तन्मिश्रजातम्, तत् [2]त्रिधा-यावदर्थिकं पाखण्डिमिश्रं साधुमिश्रं च, तत्र दुर्भिक्षादौ बहून् भिक्षाचरानुपलभ्य तदनुकम्पया यावन्तः केचन गृहस्था अगृहस्था वा भिक्षाचराः समागमिष्यन्ति तेषामपि भविष्यति कुटुम्बे चेति [3]बुद्धितः सामान्येन भिक्षाचरयोग्यं कुटुम्बयोग्यं चैकत्र मीलितं यत्पच्यते तद्यावदर्थिकमिश्रजातम् । यत्तु केवलपाखण्डियोग्यमात्मयोग्यं चैकत्र पच्यते तत्पाखण्डिमिश्रम् । यत्पुनः केवलसाधुयोग्यमात्मयोग्यं चैकत्र पच्यते तत्साधुमिश्रम्, श्रमणानां पाखण्डिष्वन्तर्भावविवक्षणात् श्रमण-मिश्रं पृथङ् नोक्तम् ४ ।

'ठवण'त्ति [4]स्थाप्यते साधुनिमित्तं कियन्तं कालं यावन्निधीयते इति स्थापना। यद्वा स्थापनं-साधुभ्यो देयमिदमितिबुद्ध्या देयवस्तुनः कियन्तं कालं व्यवस्थापनं स्थापना, तद्योगाद्देयमपि स्थापना । स्वस्थाने-चुल्ली-स्थाल्यादौ परस्थाने-सुस्थितक-च्छब्बकादौ चिरकालमित्वरकालं च साधुदाननिमित्तं धार्य-माणमशनादिकं स्थापनेति भावः ५ ।

'पाहुडियाए'त्ति [5]कस्मैचिदिष्टाय पूज्याय वा बहुमानपुरस्सरीकारेण यदभीष्टं वस्तु दीयते तत् प्राभृतमुच्यते, ततः प्राभृतमिव प्राभृतं-साधुभ्यो देयं भिक्षादिकं वस्तु, प्राभृतमेव प्राभृतिका । यद्वा प्र इति-प्रकर्षेण, आ इति-साधुदानलक्षणमर्यादया, भृता-निर्वर्तिता यका भिक्षा सा प्राभृता, ततः



---

१ तुलना-पिण्डनि. वृत्तिः पृ. ३५ A ॥ २ तुलना-पिण्डनिर्युक्तिटीका पृ. ८८ A ॥
३ बुध्यतः-जे. ॥ ४ तुलना-पिण्डनि. वृत्तिः पृ. ३५ A ॥ ५ तुलना-पिण्डनि. वृत्तिः पृ. ३५ A ॥

स्वार्थिककप्रत्ययविधानात् प्राभृतिका । [1]सा च बादरा सूक्ष्मा चेति द्विभेदा, तत्र बादरारम्भविषयतया बादरा स्थूलेत्यर्थः, स्वल्पारम्भविषयतया तु सूक्ष्मेति, एकैकाऽपि च द्विधा-उत्ष्वष्कणेन अवष्वष्कणेन च, तत्र स्वयोगप्रवृत्तिकालावधेः उत्-ऊर्द्ध्वं परतः ष्वष्कणम्-आरम्भस्य करणमुत्ष्वष्कणमभिधीयते । तथा स्वयोगप्रवृत्तकालावधेरव-अर्वाक् ष्वष्कणं-आरम्भकरणमवष्वष्कणमुच्यते ।

इह हि केनापि श्रावकेण कुत्रापि नगरे निजापत्यस्य विवाहः कर्तुमारेभे, लग्नं च भव्यं दत्तं ज्योतिषिकेण, परं तस्मिन् समयेऽन्यत्र विहृतत्वेन तत्र गुरवो न सन्ति, ततोऽसौ श्रावको विकल्पयति- अस्मिन् विवाहलग्ने सङ्खड्यामनेकाशन-खाद्यादिमनोरमायां क्रियमाणायां जनखाद्यमेव सर्वं भविष्यति । न व्रतिनां किञ्चिदुपयोगं यास्यति । कियद्दिनानन्तरं च यथाविहारक्रमं श्रीगुरवोऽप्यत्र आजिगमिषवः श्रूयन्ते । ततस्तत्समय एव मम विवाहः कर्तुं युज्यते, येन साधूनामशनादिकं पुष्कलं ददामि । तदेवा-शनादिकं सफलं यत्सुपात्रेषु विनियोगं याति । एवं च महापुण्यमुपार्जितं स्यात्, कल्याणं च महत् सम्पनीपद्यते । इत्यादि विचिन्त्य निष्टङ्कितलग्नात्परतो गुरूणामागमनसमये विवाहं करोति । एवं च विवाहदिनस्योत्ष्वष्कणं कृत्वा यदुपस्क्रियते भक्तादि सा बादरोत्ष्वष्कणप्राभृतिकेति ।

तथा केनापि श्रावकेण स्वपुत्रादेर्विवाहदिनं किञ्चिन्निष्टङ्कितम्, इतश्च निष्टङ्कितविवाहदिनादर्वागेव साधवस्तत्रागताः, ततोऽसौ परिभावयति-मयैतेषां साधूनां विपुलं विशिष्टं च भक्तपानादिकं पुण्यार्थं



१ तुलना- पिण्डनिर्युक्तिवृत्तिः पृ. ९१ त. । द्रष्टव्या पिण्डविशुद्धिवृत्तिः पृ. ३४ गाथा ४० ॥

दातव्यम्, तच्च प्रायेण विवाहादिके महति पर्वणि विशालं भवति, मत्पुत्रादिविवाहस्तु प्रारिप्सितो यतिजनेऽन्यत्र विहृते भविष्यतीति विचिन्त्य यतिजने तत्रस्थ एवान्यद्विवाहलग्नं व्यस्थापयति । अत्र च विवाहलग्नस्य भविष्यत्कालभाविनोऽवष्वष्कणं कृत्वा यदुपस्क्रियते भक्तादि सा बादरावष्वष्कणप्राभृतिकेति ।

तथा किल काचित्कुटुम्बिनी सूत्रकर्तनादिव्यापारपरायणा बालकेन रुदता भोजनं याच्यते, यथा मातः ! मम भोजनं प्रयच्छेति । तत्र च [1]प्रस्तावे प्रत्यासन्नगृहेषु भिक्षामटन् साधुसङ्घाटकस्तया ददृशे, सा च तं दृष्ट्वा सूत्रकर्तनादिलोभेन बालकं झषन्तं रुदन्तं च प्रत्यवादीत्—मा पुत्र ! प्रलप मा रोदीश्च त्वम्, इह मद्गृहे गेहानुगेहक्रमेण विचरन् यदि यतिसंघाटकः समेष्यति तस्य भिक्षादानायोत्थिता सती तवापि तत्समयमेव भोजनं दास्यामिति । ततः साधुसङ्घाटके क्रमेणागते धर्माद्यर्थमुत्थाय भिक्षां ददाति बालकस्य च भोजनम्, इह च तत्र क्षणे बालकेन याचितं भोजनं तदैव तया कर्तुमुचितस्य पुत्रभोजनदानस्य भविष्यत्कालभाविना साधुभिक्षादानेन समं यत्करणं तदुत्ष्वष्कणं, तत्र या प्राभृतिका सा सूक्ष्मोत्ष्वष्कणप्राभृतिका ।

तथा काचिद् गृहस्था कर्त्तनं कुर्वती भोजनं [2]याचमानं बालकं प्रति वदति— [3]कृणन्मि तावत्पूणिकामेकां पश्चात्ते भोजनं दास्यामीति, अत्रान्तरे च साधुरागतः, तत उत्थाय तस्मै भिक्षां ददाति बालकस्य च भोजनम्, इह च रूतपूणिकाकर्त्तनसमाप्त्यनन्तरं दातव्यतया बालकाय प्रतिज्ञाते भोजने साधुनिमित्त-

१ प्रस्त्रावे-मु. ॥ २ याच्यमानं-जे. ॥ ३ कर्तयामि-मु. । कणन्मि-जे. । कृणन्मि- इति पिण्डनिर्युक्तिवृत्तिः पृ. ९२ A ॥

मर्वागुत्थानेन यदर्वागेव बालकस्य भोजनदानं तदवष्वष्कणम्, तत्र या प्राभृतिका सा सूक्ष्मावष्वष्कणप्राभृतिकेति। इयं च प्राभृतिका साऽवर्थमुत्थिताया बालकभोजनदानादनन्तरं हस्तधावनादिनाऽप्कायाद्युपमर्दहेतुत्वादकल्पनीयेति ६।

[1]'पाओयर' त्ति [2]साधुनिमित्तं वह्नि-प्रदीप-मण्यादिस्थापनेन भित्त्याद्यपनयनेन वा बहिर्निष्काश्य धारणेन वा प्रादुः—प्रकटत्वेन देयस्य वस्तुनः करणं प्रादुष्करणम्। तद्योगाद् भक्ताद्यपि प्रादुष्करणम्, यद्वा प्रादुः—प्रकटं करणं यस्य तत् प्रादुष्करणम्, [3]तच्च द्विधा—प्रकाशकरणं प्रकटकरणं च, तत्र कोऽपि श्रावकः साधुभक्तिभूपितमानसो निरन्तरं सत्पात्रदानपवित्रीकृतनिजपाणिपल्लवो मनाक् मन्दविवेकः सान्धकारगृहमध्यस्थितस्य साधुदेयस्याशनादेरचक्षुर्विषयतया साधूनाम[4]कल्प्यतां परिभाव्य तस्य प्रकाशनार्थं भास्वरतरं मणिं तत्र व्यवस्थापयति, अग्नि-प्रदीपौ वा कुरुते, गवाक्षं वा कारयति, लघुतरं वा सद् द्वारं बृहत्तरं करोति, कुडयच्छिद्रादि वा विधापयति, इत्थं यत्स्थानस्थितस्यैव देयवस्तुनः प्रकाशनं तत्प्रकाशकरणम्। यत्पुनर्गृहमध्यवर्तिन्यां चुल्ल्यां स्वगृहार्थं राद्धस्यौदनादेरन्धकारादपसार्य बहिश्चुल्ल्यां चुल्लिव्यतिरिक्ते वाऽन्यस्मिन् सप्रकाशे प्रदेशे साधुदानार्थं स्थापनं प्रकटकरणम्, एतच्च द्विविधमपि प्रादुष्करणं षट्कायोपमर्दप्रवृत्तिदोषादिसद्भावात् साधुभिर्वर्जनीयमिति ७।

---

१ पाउअर-सं.॥ २ तुलना-पिण्डनि. वृत्तिः पृ. ३५A॥ ३ द्रष्टव्या—सटीका पिण्डनिर्युक्तिः गाथा २९८, २९९। पञ्चाशकवृत्ति १३/११। पिण्डविशुद्धिवृत्तिः गाथा ४१, ४२॥ ४ मकल्यतां-मु.॥

'कीय'त्ति [1]क्रीतं यत् साध्वर्थं मूल्यादिना परिगृहीतम् , [2]तच्च चतुर्धा—आत्मद्रव्यक्रीतम् , आत्मभावक्रीतम् , परद्रव्यक्रीतम् , परभावक्रीतं च, तत्रात्मना—स्वयमेव द्रव्येण—उज्जयन्तादितीर्थशेषादि-रूपपरावर्तादिकारिगुटिका-सौभाग्यादिसम्पादकर[3]क्षाटकादिरूपेण प्रदानतः परमावर्जयन् भक्तादि [4]गृह्णाति तदात्मद्रव्यक्रीतम् , दोषाश्चात्र उज्जयन्तादितीर्थशेषादिसमर्पणानन्तरमेव दैवयोगेन तस्य गृहिणोऽकस्मादेव ज्वरादिके मान्द्ये जातेऽनेन साधुनाऽहं निराकुलः सन् ग्लानीकृत इत्यादिप्रजल्पनतः शासनस्य मालिन्यं स्यात् । एवं ज्ञाते च राजादयः कर्षण-कुट्टनादिकं विदध्युः । [5]अथाग्रतो मन्दः सन् तेन शेषादिना समर्पितेन नीरोगः सम्पद्यते तदा चाटुकारिण एते यतय इत्युड्डाहो लोकस्य जल्पतो भवेत् । तथा निर्मा-ल्यादिप्रदानेन प्रगुणीभूतशरीरस्य गृहव्यापारादिप्रयोजकतया षड्जीवघातापन्नः कर्मबन्धः स्यादित्यादयः १ । [6]तथा आत्मना—स्वयमेव भक्ताद्यर्थं धर्मकथक-वादि-क्षपका-ऽऽतापक-कविप्रमुखैः धर्मकथोपन्यासादिलक्षणेन भावेन विधीयमानेन धर्मकथोपन्यासाद्याक्षिप्तेभ्यो जनेभ्यो यदशनादिकं गृह्यते तदात्मभावक्रीतम् , दोषा-श्चात्र निर्मलनिजानुष्ठाननिष्फलीकरणादयः २ । तथा परेण—गृहस्थेन साधुनिमित्तं सचित्ता-ऽचित्त-मिश्रभेदेन द्रव्येण कृत्वा यदशनादिकं क्रीतं तत्परद्रव्यक्रीतम् , अत्र च षट्कायविराधनादयः प्रतीता एव दोषाः ३ ।

१ तुलना पिण्डनि. वृत्तिः पृ.३५A ॥ "क्रेतुम् अन्यसत्क यत्क्रे तु दीयते क्रीतकृतं ।" इति दशवै. चूर्णिः पृ १११ । "क्रयणं क्रीतम् , भावे निष्ठाप्रत्ययः, साध्वादिनिमित्तमिति गम्यते, तेन कृतं-निर्वर्तितं क्रीतकृतम्।" इति । दशवै.हा.टी. प. ११६॥ २ तुलना- सटीका पिण्डनिर्युक्तिः गाथा ३०६-३०८ ॥ ३ ०रक्षादि०-सं. ॥ ४ गृह्यते-जे. । परमावर्ज्य यद्भ-क्तादि गृह्यते -इति पिण्डनिर्युक्ति टीका पृ. ९६ A ॥ ५ रथवा भृतो मदेः सन्-सं.॥ ६ तुलना-सटीका पिण्डनिर्युक्तिः गाथा ३०७-३१२ ॥

तथा [1]'परेण–मङ्खादिना भक्तिवशात्साधुनिमित्तं निजनिजविज्ञानप्रदर्शनादिरूपेण धर्मकथादिरूपेण वा भावेन परमावर्ज्य यत्ततो गृहीतं तत्परभावक्रीतम्, मङ्खः–केदारको यः पटमुपदर्श्य लोकमावर्जयति, इत्थंभूते च परभावक्रीते त्रयो दोषाः–एकं तावत्क्रीतम्, द्वितीयमन्यस्माद् गृहादानीतमित्यभ्याहृतम्, आनीयानीय चैकत्र साधुनिमित्तं स्थाप्यत, इति स्थापितमिति ४, ८ ।

[2]''पामिच्चे' त्ति अपमित्यं–भूयोऽपि तव दास्यामीत्येवमभिधाय यत्साधुनिमित्तमुच्छिन्नं गृह्यते तदपमित्यं [3]प्रामित्यकं वा, इह [4]यदपमित्य गृह्यते तदप्युपचारादपमित्यमित्युक्तम्। [5]तद् द्विविधं–लौकिकं लोकोत्तरं च, तत्र लौकिकं यद् गृहस्थेन परस्मादुच्छिन्नं गृहीत्वा घृतादिकं वस्तु व्रतिभ्यो वितीर्यते, दोषाश्च दासत्व-निगडनियन्त्रणादयः। लोकोत्तरं च वस्त्रादिविषयं साधूनामेव परस्परमवसेयम्, तत्तु द्विधा–कोऽपि कस्यापि सत्कमेवं वस्त्रादि गृह्णाति–यथा कियद्दिनानि परिभुज्य पुनरपि ते समर्पयिष्यामि। कोऽपि पुनरेवम्–एतावद्दिनानामुपरि तवैतत्सदृशमपरं वस्त्रादि दास्यामि। तत्र प्रथमे प्रकारे शरीरादिमलेन मलिनीकृते यदि वा पाटिते चौरादिना वा हृते मार्गे पतिते वा तस्मिन् वस्त्रादिके कलहादयो दोषाः।

---

१ तुलना-सटीका पिण्डनिर्युक्तिः गाथा ३०६ ॥ २ तुलना-''पामिच्चं' ति अपरस्मादुच्छिन्नमुद्यतकं गृहीतम्, बलात्कारितया वाऽन्यस्मदाच्छिद्य राजोपसृष्टो वाऽन्येभ्यो गृहीभ्यः साधोर्दास्यामीत्याच्छिन्द्यात्।" आचाराङ्गटीका पृ. २७१। पिण्डनि. वृत्तिः प. १५ A। पञ्चाशकप्र. १३ / १२ ॥
३ चाणक्यस्याभिप्रायेण-''सस्ययाचनमन्यतः प्रामित्यकम्। तदेव प्रतिदानार्थमापमित्यकम्।" कौटलीयअर्थशास्त्र २। १५। ३३ ॥ दशवै. टि. पृ. २६१ ॥ ४ जदि प्रत्यगृह्यते-सं. ॥ ५ द्रष्टव्या-पिण्डनि. टीका गाथा ३१६ तः ॥

द्वितीये च प्रकारे अन्यद्वस्त्रादिकं याचमानस्य तस्य दुष्कररुचेर्विशिष्टतरेऽपि दत्ते महता कष्टेन रुचिरापादयितुं शक्यते। ततः तमाश्रित्य कलहादयो दोषाः सम्भवन्तीति ९।

'परियट्टिए' त्ति परिवर्तितं यत्साधुनिमित्तं कृतपरावर्तम्, [1]तद् द्विविधं–लौकिकं लोकोत्तरं च, एकैकमपि द्विधा–तद्द्रव्यमन्यद्रव्यविषयं च। तत्र तद्द्रव्यविषयं यथा कुथितं घृतं दत्त्वा साधुनिमित्तं सुगन्धि घृतं गृह्णातीत्यादि। अन्यद्रव्यविषयं यथा कोद्रवकूरं समर्पयित्वा साधुनिमित्तं शाल्योदनं गृह्णातीत्यादि। इदं च लौकिकमेव, लोकोत्तरमपि साधोः साधुना सह वस्त्रादिपरावर्तनस्वरूपम्, इति द्विधा भावनीयम्, दोषाश्चात्रापि प्राग्वदेव १०।

'अभिहडे' त्ति [2]अभि-साध्वभिमुखं हृतं-गृहस्थेन स्थानान्तरादानीतमभिहृतम्, [3]तद् द्विधा–अनाचीर्णमाचीर्णं च। तत्रानाचीर्णं द्विविधं–प्रच्छन्नं प्रकटं च। सर्वथा साधुना अभ्याहृतत्वेन यदपरिज्ञातं तत्प्रच्छन्नम्, यत्पुनरभ्याहृतत्वेन ज्ञातं तत्प्रकटम्, एकैकमपि द्विविधं–स्वग्रामविषयं परग्रामविषयं च। यस्मिन् ग्रामे साधुर्निवसति स किल स्वग्रामः, शेषस्तु परग्रामः।

तत्र [4]काचित् श्राविका भक्तियुक्ता साधूनां प्रतिलाभनायाभ्याहृताशङ्कानिवृत्त्यर्थं प्रहेणकमिषेणोपाश्रये मोदकाद्यानीय साधुसंमुखमेवं वदति–यथा भगवन्! मया भ्रातृगेहादौ सङ्खड्यां वा गतया इदं लब्धम्, यद्वा मया स्वजनानां गृहे प्रहेणकमिदं स्वगृहान्नीतम्, तैश्च रोषादिना केनापि कारणेन न गृहीतम्,

१ द्रष्टव्या सटीका पिण्डनि. गाथा ३२३ तः॥ २ तुलना-पिण्डनि. वृत्तिः पृ. ३५B। दशवै.अग.चू.। दशवै.जिन. चू. पृ. ११२। दशवै. हा.टी.११६॥ ३ द्रष्टव्या सटीका पिण्डनिर्युक्तिः गाथा ३२९ तः। पिण्डविशुद्धिवृत्तिः ४६॥ ४ द्रष्टव्या सटीका पिण्डनिर्युक्तिः गाथा ३४१, ३४२। पिण्डविशुद्धिवृत्तिः पृ. ४१॥

सम्प्रति वन्दनार्थमत्र प्रविष्टा, ततो यदि युष्माकमिदमुपकरोति तर्हि प्रतिगृह्यतामिति । ततः सा यद्ददाति तत् प्रच्छन्नं स्वग्रामविषयमभ्याहृतम् ।

[1]तथा क्वचिद् ग्रामे बहवः श्रावकाः सन्ति । ते च सर्वेऽप्येककुटुम्बवर्तिनः । अन्यदा तेषां गृहे विवाहः समजनि । निवृत्ते च विवाहे प्रचुरमोदकाद्युद्धरितम् । ततस्तैरचिन्ति—यथैतत्साधुभ्यो दीयतां येन महत्पुण्यमस्माकमुपजायते । अथ केचित् साधवो दूरेऽवतिष्ठन्ते, केचित्पुनः प्रत्यासन्नाः । परमन्तराले नदी विद्यते, ततस्तेऽप्यप्कायविराधनाभयतो नागमिष्यन्ति, आगता अपि च प्रचुरमोदकादिकमालोक्य शुद्धमिति कथ्यमानमप्याधाकर्मशङ्कया न गृहीष्यन्ति । ततो यत्र ग्रामे साधवो निवसन्ति तत्रैव प्रच्छन्नं गृहीत्वा व्रजाम इति । तथैव च कृतम्, ततो भूयोऽपि चिन्तयन्ति—यदि साधूनाहूय दास्यामस्ततस्तेऽशुद्धमाशङ्क्य न गृहीष्यन्ति । तस्माद् द्विजादिभ्योऽपि किमपि किमपि दद्मः । तच्च तथा दीयमानमपि यदि साधवो न प्रेक्षिष्यन्ते ततस्तदवस्थैव तेषामशुद्धाशङ्का भविष्यति, ततो यत्र यत्रोच्चारादिकार्यार्थं निर्गताः सन्तः साधवः प्रेक्षन्ते तत्र दद्म इति । एवं च चिन्तयित्वा विवक्षिते कस्मिंश्चित्प्रदेशे द्विजादिभ्यः स्तोकं स्तोकं दातुमारब्धम्, तत उच्चारादिकार्यार्थं निर्गताः केचन साधवो दृष्टाः । ततस्ते निमन्त्रिता— यथा भो साधवोऽस्माकमुद्धरितं मोदकादिकं प्रचुरमवतिष्ठते, ततो यदि युष्माकं किमप्युपकरोति तर्हि तत्प्रतिगृह्यतामिति । साधवोऽपि शुद्धमित्यवगम्य प्रत्यगृह्णन् । एतत्प्रच्छन्नं परग्रामविषयमभिहृतम् । परम्परया ज्ञाते च परिष्ठापनीयम् ।



[2]तथा कश्चित्साधुर्भिक्षामटन् क्वापि गृहे प्रविष्टः, तत्र च गौरवार्हं स्वजनभोजनादिकं प्रकृतं वर्तते । ततो

१ तुल्यप्रायं पिण्डनि वृत्तिः गा. २३७ तः पृ. १०२B तः, पिण्डविशुद्धिवृत्तिः पृ.४२ ॥ २ द्रष्टव्या पिण्डनि. वृत्तिः पृ. १०३ ॥

न तदानीं साधवे भिक्षां दातुं प्रपारिता, इत्यादिभिः कारणैः काचित् श्राविका स्वगृहात्साधोरुपाश्रये मोदकादिकमानीय यद्ददाति तत्प्रकटं स्वग्रामविषयमभिहृतम्, एवं परग्रामविषयमपि प्रकटमनाचीर्णमवसेयम्।

[1]आचीर्णं पुनर्द्विविधं—क्षेत्रविषयं गृहविषयं च। क्षेत्रविषयमपि त्रिविधम्—उत्कृष्टं मध्यमं जघन्यं च। तत्र कस्मिंश्चिन्महति गृहे भूरिभुञ्जानकजनपङ्क्तिरुपविष्टा वर्तते। तस्याश्चैकस्मिन् पर्यन्ते साधुसङ्घाटको द्वितीये तु देयमशनादिकं तिष्ठति, न च साधुसङ्घाटकश्छुप्तिभयादिना देयस्याशनादेः समीपं गन्तुं शक्नोति। ततो हस्तशतप्रमितक्षेत्रादानीतं यद् गृह्णाति तदुत्कृष्टं क्षेत्राभिहृतमाचीर्णम्, हस्तशतात्परतस्त्वानीतं प्रतिषिद्धमेव। मध्यमं क्षेत्राभ्याहृतं पुनः करपरिवर्त्तादुपरि यावद्धस्तशतं किञ्चिन्न्यूनं भवति तावद्विज्ञेयम्, करपरिवर्ते तु जघन्यं क्षेत्राचीर्णमभ्याहृतम्, करपरिवर्तो नाम हस्तस्य किञ्चिच्चलनम्, यथा काचिद्दात्री ऊर्ध्वा उपविष्टा वा स्वयोगेनैव निजकरगृहीतमोदकमण्डकादिका प्रसारितबाहुस्तिष्ठति, सा च तथास्थिता साधुसङ्घाटकं दृष्ट्वा करस्थितैर्मोदकादिभिस्तं निमन्त्रयते, स च करस्याधः पात्रकं धारयति, सा च भुजमचालयन्ती किञ्चिन्मुष्टिं शिथिलयति, ततो मण्डकादिकं पात्रके पततीति। इदं क्षेत्रविषयमाचीर्णम्।

[2]गृहविषयमभ्याहृतमाचीर्णं पुनरित्थं भवति—पङ्क्तिस्थितानि त्रीणि गृहाणि सन्ति। तत्र च यदा साधुसङ्घाटको भिक्षां गृह्णाति तदा एकः साधुरेकत्र धर्मलाभिते गृह्यमाणभिक्षे गृहे उपयोगं ददानो भिक्षां

१ द्रष्टव्या-सटीका पिण्डनिर्युक्तिः गाथा ३४१ तः॥ २ द्रष्टव्या सटीका पिण्डनिर्युक्तिः गाथा ३३३,३३४। जे भिक्खू गाहावइकूल पिंडवाय पडियाए अणुपविट्ठे समाणे परं ति घरंतराओ असणं वा पाणं वा खाइमं वा साइमं वा अभिहड आहट्टु दिज्जमाणं पडिग्गाहेति, पडिग्गाहेंत वा सातिज्जति" निशीथसूत्रम् उ.३। सू.१५॥

गृह्णाति । पश्चाद्भागवर्ती द्वितीयसङ्घाटकस्तु धर्मलाभितगृहादितरयोर्गृहयोरानीयमानभिक्षयोरुपयोगं दायक-हस्तादिविषयं ददातीति गृहत्रयादानीतमाचरितमशनादिकम्, चतुर्थादेस्तु गृहान्नाचरितमिति ११ ।

'उब्भिन्ने' त्ति [1]उद्भेदनमुद्भिन्नं—साधुभ्यो घृतादिदाननिमित्तं कुतुपादेर्मुखस्य गोमयादिस्थगित-स्योद्घाटनम्, [2]तद् द्विधा—पिहितोद्भिन्नं कपाटोद्भिन्नं च, तत्र यच्छगणकाग्नितापितजतु-सचित्तपृथिवी-कायप्रभृतिभिः श्लेषद्रव्यैः पिहितद्वारं प्रतिदिनमपरिभोगं [3]खण्ड-गुडघृतादिभृतघटकुतुप-कुशूलादिकं साधु-दाननिमित्तमुद्घाट्य खण्डादिकं साधुभ्यो दीयते तद्दीयमानं खण्डादि पिहितोद्भिन्नम्, पिहितमुद्भिन्नं यत्र तत्पिहितोद्भिन्नमितिव्युत्पत्तेः । यत्पुनः [4]खण्ड-घृत-गुडादियुक्तापवरकादेर्निश्चलनिभृतदत्तकपाटस्य प्रतिदिन-मनुद्घाटितद्वारस्य साधुदाननिमित्तमुद्घाट्य कपाटानि गुड-खण्डादि साधुभ्यो दीयते तत्कपाटोद्भिन्नम् । व्युत्पत्तिः प्रागिव । दोषाश्चात्र षड्जीवनिकायविराधनादयः । तथाहि—कुतुपादिमुखाद् घृतादिकं साधवे दत्त्वा शेषस्य रक्षणार्थं भूयोऽपि कुतुपादिमुखं सचित्तपृथिवीकायेन जलार्द्रीकृतेनोपलिम्पति, ततः पृथिवीकायविरा-धनाऽप्कायविराधना च, पृथिवीकायमध्ये च मुद्गादयः कीटिकादयश्च सम्भवन्ति ततस्तेषामपि विराधना, तथा कोऽप्यभिज्ञानार्थं जतु तापयित्वा कुतुपादिमुखस्योपरि जतुमुद्रां ददाति तदा तेजस्कायविराधनाऽपि, यत्राग्निस्तत्र वायुरिति वायुकायविराधना च । तथा कुतुपादिलेपननिमित्तं मृत्तिकादि गवेषयन् दाता कदा-चिद् वृश्चिकादिना दश्यते पीड्यते चासौ, ततो जना वदन्ति—अहो महाप्रभावा एते यतयो येषां दानमात्रे



१ तुलना–पिण्डनि. वृत्ति. प. ३५B ॥ २ द्रष्टव्या–सटीका पिण्डनिर्युक्तिः गाथा ३४७ तः । पिण्डविशुद्धिवृत्तिः प.४३B तः ॥ ३ खण्डगुडादि-मु. ॥ ४ खण्डगुडादि-सं. ॥

ऽपि दात्रा फलं झगित्येवंविधं प्राप्तमित्येवं लोके उपहासः। तथा प्रथमतः कुतुपादिमुखे साध्वर्थमुद्घाटिते सति पुत्रादिभ्यो घृतादिप्रदाने तथा क्रये विक्रये च पापप्रवृत्तिः। तस्मिन् कुतुपादिमुखे पिधातुं विस्मृते मूषकादयो जीवा निपत्य विनश्यन्तीति।

कपाटोद्भिन्नेऽप्येत एव दोषाः, तथाहि—यदा कपाटात्प्राक्कथमपि पृथिवीकायो जलभृतः करवको वा बीजपूरकादिकं वा मुक्तं भवति तदा तस्मिन्नुद्घाटयमाने कपाटे तद्विराधना भवति। जलभृते च करवकादौ लुठयमाने भिद्यमाने वा पानीयं प्रसर्पन् प्रत्यासन्नचुल्ल्यादावपि प्रविशेत्, तथा च सत्यग्निविराधना, यत्राग्निस्तत्र वायुरिति वायुविराधना च, मूषिकादिविवरप्रविष्टकीटिका-गृहगोधिकादिसत्त्वविनाशे त्रसकायविराधना च, तथैव च दान-क्रय-विक्रयेभ्योऽधिकरणप्रवृत्तिरिति, ततो द्विविधमप्युद्भिन्नं न ग्राह्यम्।

यदा तु कुतुपादीनां मुखबन्धः प्रतिदिवसं बध्यते छोटयते च, तत्रापि यदि जतुमुद्राव्यतिरेकेण केवलवस्त्रमात्रग्रन्थिर्दीयते, नापि च सचित्तपृथिवीकायादिलेपस्तदा तस्मिन् साध्वर्थमुद्भिन्नेऽपि यद्दीयते तत्साधुभिर्गृह्यते। तथा कपाटोद्भिन्नेऽपि यत्र प्रतिदिनमुद्घाटयते कपाटमुल्लालकश्च भूमिघर्षकस्तथाविधो न भवति, तत्रोद्घाटितेऽपि कपाटादावपवरकादिस्थितमशनादिकं कल्पते एवेति १२।

'मालोहडे य'त्ति मालात्—[1]सिक्ककादेरपहृतं—साध्वर्थमानीतं यद्भक्तादि तन्मालापहृतम्। [2]तच्च-

१ तुलना—पिण्डनि. वृत्तिः पृ. ३५ B॥ २ "मालोहडंपि दुविहं जहन्नमुक्कोसगं च बोद्धव्वं। भग्गतलेहिं जहन्नं तव्विवरीयं तु उक्कोसं॥" पिंडनि. ३५७। व्याख्या—'मालापहृतं द्विविधम्, तद्यथा जघन्यमुत्कृष्टं च, तत्र यद्भून्यस्ताभ्यां पादयोरग्रभागाभ्यां फलकसंज्ञाभ्यां पार्ष्णिभ्यां चोत्पाटिताभ्यामूर्ध्वविलगितोच्चसिक्ककादिस्थितं

तुर्भेदम्—ऊर्द्ध्वमालापहृतम् अधोमालापहृतम् उभयमालापहृतं तिर्यग्मालापहृतं च । [1]तत्रोर्द्ध्वमालापहृतं जघन्योत्कृष्ट-मध्यमभेदात् त्रिविधम्, तत्रोर्द्ध्वविलगितोच्चसिक्ककादेर्ग्रहीतुमशक्तत्वेनोत्पाटिताभ्यां पार्ष्णिभ्यां पादाधोभागरूपाग्रेतनफणाभ्यां च भूमिन्यस्ताभ्यां दात्र्या निज[2]चक्षुषाऽदृष्टं यद् गृहीतमशनादि तत्पाष्ण्युत्पाटनमात्रस्तोकक्रियागृहीतत्वाज्जघन्यमूर्ध्वमालापहृतम्, यच्च निश्रेण्यादिकमारुह्य प्रासादोपरितलाद्दात्र्या गृहीतं तन्निश्रेण्यारोहणादिगुरुक्रियागृहीतत्वादुत्कृष्टं मालापहृतम्, अनयोर्मध्यवर्ति मध्यममिति । [3]तथा साध्वर्थं भूमिगृहादौ प्रविश्य तत्र स्थितं भक्तादिकं यदानीय ददाति तदधोवर्तिभूमिगृहादेरपहृतमितिकृत्वाऽधोमालापहृतम्, तथोष्ट्रिका-कलश-मञ्जूषा-कोष्ठकादिस्थितं किञ्चित्सकष्टं यद्दात्री

---

दात्र्या दृष्टेरगोचरं यद्दीयते तज्जघन्यं मालापहृतम्, 'तद्विपरितम्' जघन्यविपरीतम् बृहन्निःश्रेण्यादिकमारुह्य प्रासादोपरितलादानीय दीयते तदुत्कृष्टं मालापहृतम् ।" तत्रैव वृत्ति. पृ. १०७-१०८ । "सम्प्रति-मालापहृतमेव भङ्ग्यन्तरेणाह-"उड्ढमहे तिरियंपि य अहवा मालोहडं भवे तिविहं । उड्ढे य महोयरणं भणियं कुंभाइसु उभय ॥" पिंडनि. ३६३ । अथवा मालापहृतं त्रिविधम्, तद्यथा ऊर्ध्वमधस्तिर्यक् च, तत्र ऊर्ध्वमेतदनन्तरोक्तमूर्ध्वविलगितसिक्कादिगतम्, अधोभूमिगृहादाववतरणम्-प्रवेशः, तत्राऽधोवतरणेन यद्दीयते तदप्युपचारादधोऽवतरणम्, तथा 'कुम्भादिषु' कुम्भोऽष्ट्रिकाप्रभृतिषु यद्वर्तते देयं तदुभयम्-ऊर्ध्वाऽधोमालापहृतस्वभावं भणितं तीर्थकरादिभिः, तथाहि—बृहत्तरोच्चैस्तरकुम्भादिमध्यव्यवस्थितस्य देयस्य ग्रहणाय येन दात्री पाष्ण्युत्पाटनादि करोति तेनोर्ध्वमालापहृतम्, येन त्वधोमुखं बाहुमतिप्रभूतं व्यापारयति तेनोधोमालापहृतम्, दोषा अत्रापि पूर्ववद्भावनीयाः" ; इति तत्रैव वृत्तिः पृ. १०९-११० । पिण्डविशुद्धिवृत्तिः (गाथा ४३) द्रष्टव्या ॥

१ तुलना-पिण्डविशुद्धिवृत्तिः गाथा ४१ पृ ४५ ॥ २ 'दष्टेगोचरं' इति पिण्डनि. वृत्तिः पृ.१०८A । 'दृष्ट्या दृष्ट'-इति पिण्डविशुद्धिवृत्तिः पृ. ४५B ॥ ३ तुलना-पिण्डविशुद्धिवृत्तिः पृ. ४६ B तः ॥

ददाति तदुभयस्मादूर्ध्वा-ऽधोगतव्यापारा[1]दुष्ट्रिका-कलश-मंजूषा-कुम्भ्यादेरपहृतमितिकृत्वोभयमालापहृतम्। तथाहि—बृहत्तरोच्चैस्तरकुम्भ्यादि[2]मध्यस्थितस्य देयस्य ग्रहणाय येन दाता पाष्ण्युत्पाटनं करोति तेनोर्ध्वाश्रितव्यापारता, येन त्वधोमुखं बाहुं व्यापारयतीति तेनाधो[3]गतव्यापारता, यदा च पृथुलभित्त्यादिस्थिते स्कंधसमोच्चप्रदेशप्राये दीर्घगवाक्षादौ तिर्यक्प्रसारितबाहुः[4]क्षिप्तेन हस्तेन गृहीत्वा यद्देयं प्रायेण दृष्ट्याऽदृष्टं दाता दत्ते तदा तत्तिर्यग्मालापहृतम्। तिर्यग्मालाद्—भित्त्यादिस्थितगवाक्षादिरूपादपहृतमितिकृत्वा।

न चेदमत्र वक्तव्यं—मालाशब्देनोच्चप्रदेश एवाभिधीयते तत्कथं भूमिगृहादीनामधोभूमिस्थितानां मालशब्दाभिधेयत्वमिति ?, यतो लोकरुढ्या उच्चैःप्रदेशवाचको नात्र मालशब्दो गृह्यते, किन्तु समयप्रसिद्ध्या। समये च भूमिगृहादिकमपि मालशब्देनाभिधीयत इति।

दोषाश्चात्र [5]मञ्चक-मञ्चिकोदूखलादिष्वारुह्य पार्ष्णी चोत्पाट्य उर्द्ध्वविलगितसिक्ककादिस्थितमोदकादिग्रहणे कथमपि यदि मञ्चकादिल्हसनतो दात्री निपतति तदा तदधःस्थितानां पिपीलिकादीनां पृथिव्यादिकायादीनां च विनाशः दात्र्याश्च हस्तादिभङ्गः। यदिवा विसंस्थुलपतनतः कथमप्यस्थानाभिघातसम्भवात् प्राणव्यपरोपणमपि। तथा प्रवचनस्योड्डाहो यथा साध्वर्थमेषा भिक्षामाहरन्ती परासुरभूत्, तस्मान्नामी साधवः कल्याणकारिणः, एवंविधमपि दात्र्या अनर्थमेते न जानन्तीत्येवं लोकमध्ये मूर्खताप्रवादश्चेत्येव-

१ ०दुष्ट्रिकाकुम्भ्या० जे. ॥ २ ०मध्ये स्थित० सं. ॥ ३ ०गतिव्या० सं। ०धोगत० इति पिण्डविशुद्धिवृत्तिपाठः पृ ४७A॥ ४ ०बाहुना-इति पिण्डविशुद्धिवृत्तिपाठः पृ.४७A ॥ ५ द्रष्टव्या-पिण्डनि. वृत्तिः गाथा ३६१ ॥

मादयः । तस्मान्मालापहृतं साधुभिर्न ग्राह्यम् , [1]यत्पुनर्दर्दरसोपानादीनि सुखावताराण्यारुह्य ददाति तन्माला-पहृतं न भवति । केवलं साधुरन्येषणाशुद्धिनिमित्तं प्रासादस्योपरि दर्दरादिना चटति, अपवादेन भूस्थोऽप्या-नीतं गृह्णातीति १३ ।

'अच्छिज्जे' त्ति [2]आच्छिद्यते–अनिच्छतोऽपि भृतक-पुत्रादेः सकाशात् साधुदानाय परिगृह्यते यत्तदाच्छेद्यम् । [3]तत् त्रिविधं–स्वामिविषयं प्रभुविषयं स्तेनविषयं च । तत्र ग्रामादिनायकः स्वामी, स्वगृहमात्रनायकः प्रभुः, स्तेनः–चौरः, ततो ग्रामादिस्वामी यतीन् दृष्ट्वा भद्रकतया कलहेनाकलहेन वा बलादपि साधुनिमित्तं कौटुम्बिकेभ्यः सकाशादशनाद्याच्छिद्य यतिभ्यो यद्ददाति तत् स्वामिविषयमाच्छेद्यम् । तथा यद्गोरक्षक-कर्मकर-पुत्र-पुत्रिका-वधू-भार्यादिसत्कमेतेभ्योऽनिच्छद्भ्योऽपि सकाशाद् गृहीत्वा गृहनायकः साधुभ्यो दुग्धादिकं दद्यात्तत्प्रभुविषयमाच्छेद्यम् । तथा स्तेना अपि केचित् संयतान् प्रति भद्रका भवन्ति, ततस्ते मार्गे आगच्छन्तः कदाचित्तथाविधसार्थेन सार्धमागतान् भोजनार्थं कृतावस्थितेः सार्थस्य मध्ये भिक्षामटतः परिपूर्णान्नमप्राप्नुवतश्च संयतान् दृष्ट्वा तन्निमित्तमात्मनो वाऽर्थाय सार्थिकेभ्यो बलादाच्छिद्य पाथेयादि यदि साधुभ्यो दद्युस्तत् स्तेनविषयमाच्छेद्यम् , एतत् त्रिविधमपि आच्छेद्यं साधूनां न कल्पते । अप्रीति-कलहा-ऽऽत्मघाता-ऽन्तराय-प्रद्वेषाद्यनेकदोषसम्भवात् केवलं स्तेनाच्छेद्येऽयं विशेषः– यथा येषां सम्बन्धि भक्तादि बलादाच्छिद्य चौराः साधुभ्यः प्रयच्छन्ति, त एव सार्थिका यदि स्तेनै-

१ द्रष्टव्या-सटीका पिण्डनिर्युक्तिः गाथा ३६४ ॥ २ तुलना-पिण्डनि- वृत्तिः पृ ३५ B ॥
३ द्रष्टव्या-सटीकापिण्डनिर्युक्तिः गाथाः ३६६ तः ॥

र्बलाद्दाप्यमाना एवं ब्रुवते- [1]अस्माकमवश्यं चौरैर्गृहीतव्यम्, ततो यदि चौरा अपि यदि युष्मभ्यं दापयन्ति तदा महानस्माकं सन्तोष इति। तत एवं सार्थिकैरनुज्ञाताः साधवो दीयमानं गृह्णन्ति । पश्चाच्चौरेष्वपगतेषु भूयोऽपि तद् द्रव्यं गृहीतं तेभ्यः समर्पयन्ति । यथा तदानीं चौरप्रतिभयादस्माभिर्गृहीतं सम्प्रति ते गतास्ततत एतदात्मीयं द्रव्यं यूयं गृह्णीथेति । एवं चोक्ते सति यदि तेऽपि समनुजानते यथा युष्मभ्यमेव तदस्माभिर्दत्तमिति तर्हि भुञ्जते कल्पनीयत्वादिति १४ ।

'अणिसिट्ठे'त्ति [2]न निसृष्टं-सर्वैः स्वामिभिः साधुदानार्थमनुज्ञातं यत्तदनिसृष्टम् । तत् [3]त्रिधा-साधारणानिसृष्टं चोल्लकानिसृष्टं जड्डानिसृष्टं च । तत्र साधारणं-बहुजनसामान्यम्, चोल्लकं-स्वामिना पदातिभ्यः प्रसादीक्रियमाणम्, कौटुम्बिकेन वा क्षेत्रादिस्थितकर्मकरेभ्यो दीयमानं देशीभाषया भक्तमुच्यते, जड्डो-हस्ती तैरनिसृष्टम्-अननुज्ञात न कल्पते साधूनाम् ।

तत्र साधारणानिसृष्टं च यन्त्र-हट्ट-गृहादिस्थिततिलकुट्टि-तैल-वस्त्र-लड्डुक-दध्यादिदेयवस्तुभेदे-नानेकवस्तुविषयम् । तत्र घाणकादियन्त्रे तिलकुट्टि-तैलादिकम्, हट्टे वस्त्रादिकम्, गृहेऽशनादिकम्, बहुजनसाधारणं च सर्वैः स्वामिभिरननुज्ञातं यदेकः कश्चित्साधुभ्यः प्रयच्छति तत् साधारणानिसृष्टम् ।

---

१ तुलना-पिण्डनि. टीका गाथा ३७६, पृ. ११३ ॥ २ तुलना-पिण्डनि वृत्तिः पृ. ३५B ॥ ३ तुलना-पिण्डविशुद्धिवृत्ति. पृ ४ १A॥ "लड्डुग चोल्लग जंते संखडि खीरावणाईसु" पिण्डनि. ३७७ । "तच्चानिसृष्टमनेकधा, तद्यथा-'लड्डु-कविषयम्, मोदकविषयम, तथा 'चोल्लकविषयम्' भोजनविषयम्, 'यन्त्रे' इति 'कोल्हकादिघाणविषयम्, तथा 'सखडिविषयम्' विवाहादिविषयम, तथा 'क्षीरविषयम दुग्धविषयम, तथा आपणादिविषयम्, आदिशब्दाद् गृहादिविपयमवसेयम् ।" इति तत्रैवटीकायाम् पृ. ११३ A॥

तथा [1]चोल्लको द्विविधः-छिन्नोऽच्छिन्नश्च, तत्र कोऽपि [2]कौटुम्बिकः क्षेत्रगतहालिकानां कस्यापि पार्श्वे कृत्वा भोजनं प्रस्थापयति। स यदा एकैकहालिकयोग्यं पृथग्पृथग्भाजने कृत्वा प्रस्थापयति तदा स चोल्लकश्छिन्नः। यदा तु सर्वेषामपि हालिकानां योग्यमेकस्यामेव स्थान्यां कृत्वा प्रेषयति तदा सोऽच्छिन्नः। तत्र यश्चोल्लको यस्य निमित्तं छिन्नः स तेन दीयमानो मूलस्वामिना कौटुम्बिकेन दृष्टोऽदृष्टो वा साधूनां कल्पते। तेन छेदनेन तस्य स्वकीयीकृतस्य दत्तत्वात्। अच्छिन्नोऽपि कौटुम्बिकेन येषां हालिकानां योग्यः स चोल्लकस्तैश्च साधुभ्यो दानायानुज्ञातो दृष्टोऽदृष्टो वा कल्पते। तैः पुनरननुज्ञातोऽन्यतरेणानुज्ञातो वा न कल्पत एव। प्रद्वेषा-ऽन्तराय-परस्परकलहादिदोषसम्भवात्।

तथा जड्डानिसृष्टं [3]हस्तिनो भक्तं [4]मेण्ठेनानुज्ञातमपि राज्ञा हस्तिना चाननुज्ञातत्वान्न कल्पते। हस्तिनो हि भक्तं राज्ञः सम्बन्धि, ततो [5]राज्ञाननुज्ञातस्य ग्रहणे ग्रहणा-ऽऽकर्षण-[6]वेषोद्दालनादयो दोषा भवेयुः। तथा मदीयाज्ञामन्तरेणैष साधवे पिण्डं ददातीति रुष्टः सन् राजा कदाचिन्मेण्ठं स्वाधिकाराद् भ्रंशयति। ततस्तस्य वृत्तिच्छेदः साधुनिमित्त इति साधोरन्तरायदोषः, [7]राज्ञाननुज्ञातत्वाददत्तादानदोषश्च।

१ 'चुल्लक' इति पिण्डनि. टीका पृ. ११४B, एवमग्रेपि॥
२ तुलना-पिण्डनि. टीका पृ. ११४B, पिण्डविशुद्धिवृत्तिः पृ. ४६Bतः॥ ३ तुलना-पिण्डनि. वृत्तिः पृ. ११५A॥
४ मेण्ठे०-इति मु.। पिण्डनि. वृत्तौ अपि मिण्ठे० इति पाठः, एवमग्रेपि। पिण्डविशुद्धिवृत्तौ 'मेण्ठ' इति पाठः पृ. ५०॥ ५ राजाननु० मु.। पिण्डनि. वृत्तावपि [पृ.११५] राज्ञाननु० इति पाठः॥ ६ ०वेषाद्दाल० सं.॥
७ राजाननु० मु.॥

तथा गजस्य पश्यतो मेण्ठस्यापि सत्कं न गृह्णीयात् । गजो हि सचेतनः, ततो मदीयकवलमध्यादनेन मुण्डेन पिण्डो गृह्यते इत्येवं कदाचिद् रुष्टः सन् यथायोगं मार्गे परिभ्रमन्नुपाश्रये तं साधुं दृष्ट्वा तमुपाश्रयं स्फोटयेत् साधुं च कथमपि प्राप्य मारयेदिति १५ ।

'अज्झोयरए य' त्ति [1]अधि—आधिक्येनावपूरणं—स्वार्थदत्ताधिश्रयणादेः साध्वागमनमवगम्य तद्योग्यभक्तसिद्ध्यर्थं प्राचुर्येण भरणमध्यवपूरः, स एव स्वार्थिककप्रत्ययविधानादध्यवपूरकः, तद्योगाद्भक्ताद्यप्यध्यवपूरकः । स च त्रिधा—स्वगृहयावदर्थिकमिश्रः, स्वगृहसाधुमिश्रः, स्वगृहपाखण्डिमिश्रश्च, स्वगृहश्रमणमिश्रस्तु स्वगृहपाखण्डिमिश्रे अन्तर्भावित इति पृथङ् नोक्तः । तत्र यावदर्थिकाद्यागमनात्प्रथममेवाग्निसन्धुक्षणस्थालीजलप्रक्षेपादिरूपे आरम्भे स्वार्थं निष्पादिते पश्चाद्यथासम्भवं त्रयाणां यावदर्थिकादीनामर्थायाधिकतरान् तण्डुलादीन् प्रक्षिपति, एषोऽध्यवपूरकः । अत एवास्य मिश्रजाताद्भेदः, [2]यतो मिश्रजातं तदुच्यते यत्प्रथमत एव यावदर्थिकाद्यर्थमात्मार्थं च मिश्रं निष्पाद्यते । यत्पुनः प्रथमत आरभ्यते स्वार्थम्, पश्चात्प्रभूतान् यावदर्थिनः [3]पाखण्डिनः साधून् वा समागतानवगम्य तेषामर्थायाधिकतरजल-तण्डुलादि प्रक्षिप्यते, सोऽध्यवपूरक इति । अत्र च स्वगृहयावदर्थिकमिश्रे अध्यवपूरके शुद्धभक्तमध्ये यावन्तः कणाः कार्पटिकाद्यर्थं पश्चात्क्षिप्तास्तावन्मात्रे स्थाल्याः पृथक्कृते कार्पटिकेभ्यो वा दत्ते सति शेषमुद्धरितं यद्भक्तं

१ तुलना-पिण्डनि. वृत्तिः प. ३५ B ॥ २ तुलना-पिण्डनि. वृत्तिः प. ११५ B तः ॥ ३ पाषण्डिनः-इति पिण्डनि. वृत्तिः प. ११६ A ॥

तत्साधूनां कल्पते, अत एव चायं विशोधिकोटिर्वक्ष्यते । तथा स्वगृहपाखण्डिमिश्रे स्वगृहसाधुमिश्रे च शुद्ध-भक्तमध्यपतिते यदि तावन्मात्रं स्थाल्याः पृथक्कृतं दत्तं वा पाखण्ड्यादिभ्यस्तथापि शेषं न कल्पते, यतः सकलमपि तद्भक्तं पूतिदोपदुष्टं भवतीति १६ ॥ ५६३–५६५ ॥



उक्ताः षोडश उद्गमदोषाः, अथ उत्पादनादोषानाह—

[1]धाई १ दुई २ निमित्ते ३ आजीव ४ वणीमगे ५ तिगिच्छा ६ य ।
कोहे ७ माणे ८ माया ९ लोभे १० य हवंति दस एए ॥५६६॥
पुव्विं पच्छा संथव ११ विज्जा १२ मंते १३ य चुण्ण १४ जोगे १५ य ।
[2]उप्पायणाय दोसा सोलसमे मूलकम्मे १६ य ॥५६७॥

[ पिण्डनिर्युक्तिः ४०८-४०९ ]

'धाई' त्यादिगाथाद्वयम् , तत्र धयन्ति–पिबन्ति बालकास्तामिति, धीयते–धार्यते बालानां दुग्ध-पानाद्यर्थमिति वा धात्री–बालपालिका । सा च [3]पञ्चधा-क्षीरधात्री, मज्जनकधात्री, मण्डनधात्री, क्रीडन-धात्री, उत्सङ्गधात्री च । इह धात्रीत्वस्य यत्करणं कारणं वा तद्धात्रीशब्देनोक्तं द्रष्टव्यम् , तथाविवक्षणात् ।

१ इतः पूर्वम् ''उप्पायणदोसत्ति' इत्यधिकं ता. प्रतौ । गाथाद्वयं पिण्डविशुद्धौ ५८-५९ क्रमाङ्केन विद्यते ।
२ उप्पाणाय-मु. । उप्पायणाइ-इति पिण्डनिर्युक्तिः ४०९, पिण्डविशुद्धिः ५९ ॥
३ तुलना-''खीरे य मज्जणे मंडणे य कीलावणंकधाई य । एक्केक्कावि य दुविहा करणे कारावणे चेव ॥' इति पिण्डनिर्युक्तिः ४१० । पिण्डविशुद्धिः गा. ६० द्रष्टव्या ॥

ततो धात्र्याः पिण्डो धात्रीपिण्डः, धात्रीत्वस्य करणेन कारणेन च य उत्पाद्यते पिण्डः स धात्रीपिण्ड इत्यर्थः । एवं दूत्यादिष्वपि भावनीयम् ।

इयमत्र भावना– [1]कश्चित्साधुर्भिक्षार्थं पूर्वपरिचितगृहे प्रविष्टो रुदन्तं बालकं विलोक्य तन्मातरमाह– यथाऽयं हि बालकोऽद्यापि क्षीराहारः, ततः क्षीरमन्तरेणावसीदन् रोदिति, तस्मान्मह्यं शीघ्रं भिक्षां देहि, पश्चादेनं बालकं स्तन्यं पायय, यद्वा प्रथमत एनं स्तन्यं पायय पश्चान्मह्यं भिक्षां देहि, यदि वा अलं मे सम्प्रति भिक्षया पायय स्तन्यं बालकमेव, पुनरप्यहमन्यगृहे गत्वाऽत्र समेष्यामि, यद्वा तिष्ठ त्वं निराकुला अहमेवास्मै कुतोऽप्यानीय क्षीरं दास्यामि, एवं स्वयं धात्रीत्वं करोति । तथा [2]मतिमान् रोगरहितो दीर्घायुश्च बालः स्तन्यं पायितः स्यात्, अपमानितस्तु विपरीतः । तथा दुर्लभं खलु लोके पुत्रमुखदर्शनम्, तस्मात्सर्वाण्यन्यानि कर्माणि मुक्त्वा त्वमेनं बालकं स्तन्यं पाययेति । एवं च क्रियमाणे बहवो दोषा भवेयुः, [3]तथाहि–बालकमाता भद्रकत्वादावर्जितमानसा सत्याधाकर्मादिकं कुर्यात् । तथा बालकस्वजनोऽन्यो वा प्रातिवेशिमकादिर्बालकमात्रादिना सह सम्बन्धं साधोः सम्भावयेच्चाटुकरणदर्शनात् । यदि च प्रान्ता बालजननी भवेत्तदा प्रद्वेषं व्रजेत्, अहो प्रव्रजितस्यास्य महती परकीया तप्तिः । तथा वेदनीयकर्म-

---

१ तुलना–सटीका पिण्डनिर्युक्तिः गाथा ४१२ । पिण्डविशुद्धिवृत्तिः पृ. ५५ तः ॥ २ तुलना–"मइमं अरोगि दीहाउओ य होइ अविमाणिओ बालो । दुल्लमयं खु सुयमुह पिज्जाहि अहं व से देमि ॥" इति पिण्डनिर्युक्तिः ४१३ । पिण्डविशुद्धिवृत्तिः पृ. ५६ A ॥ ३ तुलना–सटीकापिण्डनिर्युक्तिः गाथा ४१४ । पिण्डविशुद्धिवृत्तिः प. ५६ A ॥

विपाकवशात्कदाचिद्बालकस्य ज्वरादिमान्द्ये सञ्जाते त्वया मदीयपुत्रो ग्लानीकृत इत्यादि साधुना सह कलहकरणात्प्रवचनमालिन्यं स्यादिति ।

अथवा कस्यापीश्वरस्य गेहे बालधापनपरां धात्रीं स्वबुद्धिप्रपञ्चेनोत्सार्यान्यां तत्र स्थापयन् धात्रीत्वलक्षणं दोषमासादयति । [1]तथाहि-भिक्षाचर्यायां प्रविष्टः कश्चित्साधुः क्वचिद्गेहे महिलां काञ्चित् सशोकामवलोक्य पप्रच्छ-किं त्वमद्याधृतिपरा दृश्यसे ?, सा प्राह-धार्मिक यते ! दुखं दुःखसहायस्यैव कथ्यते, यतिराह-को दुःखसहायो भण्यते ?, सा प्राह-यः कथितदुःखप्रतीकारं कुरुते, मुनिराह-मां मुक्त्वा कोऽन्यस्तथाभूतः ?, सा प्राह-भगवंस्तर्हि स्फेटितमपरधात्र्या अमुकस्मिन् गृहे मम धात्रीत्वं तेनाहं विषण्णेति, ततः साधुरुत्पन्नाभिमानो यावत्त्वां न तत्र तथा स्थापयामि न तावत्त्वदीयां भिक्षां गृह्णामीत्यभिधाय स्फेटयितुमिष्टाया धात्र्या अदृष्टत्वात् तत्स्वरूपमजानानतस्तस्या एव पार्श्वे पृच्छति-सा किं तरुणी मध्यमा वृद्धा वा ?, प्रतनुस्तनी स्थूलस्तनी कूर्परस्तनी वा ?, मांसला कृशा वा ?, कृष्णा गौरी वेत्यादि । पृष्ट्वा च तत्रेश्वरगृहे गतः सन् तं बालकमालोक्य गृहस्वाम्यादिसमक्षं धात्रीदोषान् ब्रूते । [2]यथा वृद्धा धात्री अबलस्तन्या स्यात्, तां धयन् बालोऽप्यबलः सम्पद्यते । कृशा च धात्री स्तोकस्तन्या भवेत्, तां धयन् शिशुरपि परिपूर्णस्तन्याभावात् सीदन् कृश एव भवति । स्थूलस्तन्याः स्तन्यं धयन् कोमलाङ्गत्वात्

१ तुलना-सटीका पिण्डनिर्युक्तिः ४१५ तः पिण्डविशुद्धिवृत्तिः प. ५६ ॥

२ तुलना-"थेरी दुब्बलखीरा चिमिढो पेल्लियमुहो अइथणीए । तणुई उ मंदखीरा कुप्परथणियाए सूइमुहो ॥" इति पिण्डनि. ४१८ । अत्रस्था वृत्तिरपिद्रष्टव्या । पिण्डविशुद्धिवृत्तिः (पृ.५६) अपि तुलनीया ॥

कुचचम्पितवक्त्रघ्राणः सन् चिपिटघ्राणः स्यात् । [1]कूर्पराकारस्तनीं च धयन् बालः सर्वदैव स्तनाभिमुखदी-
र्घीकृतमुखतया सूचीसदृशवदनः स्यात् । उक्तं च—

"निःस्थामा स्थविरां धात्रीं सूच्यास्यः कूर्परस्तनीम् । चिपिटः स्थूलवक्षोजां धयंस्तन्वीं कृशो भवेत् ॥१॥
जाड्यं [2]भवति [3]स्थूलायास्तनुकयास्त्वबलकरम् । तस्मान्मध्यबलस्थायाः, स्तन्यं पुष्टिकरं मतम् ॥२॥"

[4]तथा अभिनवस्थापिता धात्री येन वर्णेन कृष्णादिना उत्कटा भवति तेन वर्णेन तां निन्दति । यथा—
"कृष्णा भ्रंशयते वर्णं, गौरी तु बलवर्जिता । [5]ततः श्यामा भवेद्धात्री, बलवर्णप्रसाधिता ॥१॥"
इत्यादि, एतद् गृहस्वामी श्रुत्वा स्थविरत्वादिस्वरूपां च वर्तमानधात्रीं परिभाव्य स्फेटयति साधुप्रणीतां
च धात्रीं करोति । सा च प्रमुदिता तस्मै साधवे मनोज्ञां विपुलां भिक्षां प्रयच्छतीति धात्रीपिण्डः ।

अत्र च बहवो दोषाः, [6]तथाहि—या स्फेटिता धात्री सा विद्वेषं याति । तथा यति साधुप्रणीतया
सह स्वेच्छमास्ते इत्यालं ददाति । अतिद्विष्टा च सती विषादिदानेन कदाचिन्मारयत्यपीति । यापि
चिरन्तनीं स्फेटयित्वा संप्रति स्थापिता साऽपि कदाचिदेवं चिन्तयति, यथाऽहमनेनाऽन्यां स्फेटयित्वा
धात्री कृता तथाऽन्यया कदाचिदभ्यर्थितो मामपि धात्रीत्वात् स्फेटयिष्यति, ततस्तया [illegible]

[1] कूर्पराकारस्तन्यां-जे. ॥ [2] भवेत-सं. ॥ [3] स्थूलायाः० इति पिण्डनि. मूलि: ४१५ ॥ [4] तुलना-सटीका पिण्ड-
निर्युक्तिः ४१६ । पिण्डविशुद्धिवृत्तिः पृ. ७६ ॥ [5] तेन श्यामा० जे. । तस्माच्छ्यामा० इति पिण्डनिर्युक्तिवृत्तौ
[प. १२३B] पाठः । तस्माच्छ्यामा-इति पिण्डविशुद्धिवृत्तौ (प. ७३B) पाठः ॥
[6] द्रष्टव्या-सटीका पिण्डनिर्युक्तिः ४२० । पिण्डविशुद्धिवृत्तिः पृ. ७६ ॥

न भवतीति विचिन्त्य विषादिप्रयोगेण मारयेदिति । [1]एवं मज्जनधात्रीत्वकारणे स्वयं वा करणे, मण्डनधात्रीत्वकारणे स्वयंकरणे वा, क्रिडनकधात्रीत्वकारणे स्वयंकरणे वा, अङ्कधात्रीत्वकारणे स्वयंकरणे वा दोषाः परिभाव्य भणनीया इति १॥

'दूई'त्ति दूती–परस्परसंदिष्टार्थकथिका । ततो दूतीत्वकरणेन–परस्परसन्दिष्टार्थकथनेन यः पिण्ड उपार्ज्यते यतिना स दूतीपिण्डः । सा च दूती [2]द्विधा–स्वग्रामे परग्रामे च । तत्र यस्मिन् ग्रामे साधुर्वसति तस्मिन्नेव ग्रामे यदि सन्देशं कथयति तदा स्वग्रामदूती । यदा तु परग्रामे गत्वा सन्देशं कथयति तदा परग्रामदूती । [3]एकैकाऽपि च द्विधा–प्रकटा प्रच्छन्ना च । प्रच्छन्ना पुनरपि द्विधा–एका लोकोत्तरविषया, द्वितीयसङ्घाटकसाधोरपि गुप्तेत्यर्थः, द्वितीया [4]पुनर्लोकलोकोत्तरविषया, पार्श्ववर्तिनो जनस्य सङ्घाटकद्वितीयसाधोरपि च गुप्तेति भावः ।

[5]तत्र कश्चित्साधुर्भिक्षाकृते व्रजन् विशेषतस्तल्लाभार्थं तस्यैव ग्रामस्य सम्बन्धिनः पाटकान्तरे ग्रामान्तरे वा जनन्यादेः सत्कं पुत्रिकादेरग्रतो गत्वा सन्देशकं कथयति, यथा सा तव माता स तव पिता वा स तव भ्रात्रादिर्वा त्वयाऽद्यात्रागन्तव्यमित्यादि त्वत्सम्मुखं वदतीत्येवं स्वपक्ष-परपक्षयोः श‍ृण्वतो-

१ विशेषार्थं द्रष्टव्या पिण्डनिर्युक्तिः गाथा ४२२ तः । पिण्डविशुद्धिवृत्तिः प. ५७ ॥

२ तुलना-पिण्डनिर्युक्तिवृत्तिः ४२८॥ ३ तुलना- पिण्डनिर्युक्तिवृत्तिः ४२६ ॥ ४ पुनर्लोकलोकोत्तरविषया- मु. । तुलना–"बीया पुण उभयपक्खे वि ॥" पिण्डनिर्युक्तिः ४२६ "द्वितीया पुनरुभयपक्षेऽपि, लोके लोकोत्तरे च" इति तत्रैव वृत्तिः प. १२६B ॥ ५ तुलना–सटीका पिण्डनिर्युक्तिः ४३० । पिण्डविशुद्धिवृत्तिः प. ५८ A ॥

निःशङ्कं कथनात् प्रकटं स्वग्राम-परग्रामविषयं दूतीत्वम् ।

[1]तथा कश्चिद्यतिः कयाचिद् दुहित्रा मात्रादिकं प्रति स्वग्रामे परग्रामे वा सन्देशकथनायाभ्यर्थितः, ततस्तत्सन्देशकमवधार्य तज्जनन्यादिपार्श्वे गतः सन्नेवं चिन्तयति–दूतीत्वं खलु गर्हितं सावद्यत्वात्, ततो द्वितीयसङ्घाटकसाधुर्मा मां दूतीदोषदुष्टं ज्ञासीदित्येवमर्थं भङ्ग्यन्तरेणेदं भणति–यथा श्राविके ! अतिमुग्धा सा तव दुहिता येवं सावद्ययोगरहितानस्मान् प्रति वदति–यथेदं प्रयोजनं मदीयागमनादिकं मम मातुस्त्वया कथनीयमिति । साऽपि दक्षतयाऽभिप्रायं ज्ञात्वा द्वितीयसङ्घाटकसाधुचित्तरक्षणार्थं प्रतिभणति–यथा वारयिष्येऽहं तां तवाभिमुखं पुनरेवं वदन्तीमित्येवं सङ्घाटकसाधोरिदं गोपायितुमिष्टं न लोकस्येति लोकोत्तरप्रच्छन्नं स्वग्रामपरग्रामविषयं दूतीत्वम् ।

[2]उभयप्रच्छन्नं पुनरेवं–काचित् श्राविका साधुं प्रति वदति–यथा मज्जनन्यादेस्त्वमेवं कथयेः–तत्कार्यं तव प्रतीतं यथा त्वं जानासि तथैव सम्पन्नमिति । इह च साधुसङ्घाटकस्य शेषलोकानां च सन्देशार्थानवगमादुभयप्रच्छन्नत्वम्, [3]दोषाश्च सर्वत्र गृहस्थव्यापारणादिना जीवोपमर्दादयः २ ॥

'निमित्त'न्ति [4]निमित्तम्–अतीताद्यर्थपरिज्ञानहेतुः शुभा-ऽशुभचेष्टादि, तद्धेतुकं ज्ञानमपि उपचारान्निमित्तम्, तत्करणेन पिण्डो निमित्तपिण्डः । अयमर्थः–कश्चिद् व्रती पिण्डादिलाभनिमित्तं गृहिणामग्रतो

१ तुलना-सटीका पिण्डनिर्युक्तिः ४३१ । पिण्डविशुद्धिवृत्तिः प. ५८ A ॥
२ तुलना- सटीका पिण्डनिर्युक्तिः ४३२ । पिण्डविशुद्धिवृत्ति. पृ. ५८ A ॥
३ तुलना- पिण्डविशुद्धि. पृ ५८ ॥ ४ द्रष्टव्या-सटीका पिण्डविशुद्धिः ६२ ॥

निमित्तं कथयति, यथाऽतीते दिने तवेदं सुख-दुःखादिकं जातम् , तथा भाविनि कालेऽमुकस्मिन् दिने तव राजादेः सत्कः प्रसादो भविष्यति, सम्प्रति चाद्यैव दिने तवेदमिदं च भविष्यतीति । तेऽपि च गृहस्था लाभा-ऽलाभ सुख-दुःख जीवित-मरणादिविषयं निमित्तं पृष्टमपृष्टं वा धृष्टेन तेन कथ्यमानं श्रुत्वा आव-र्जितमानसास्तस्मै मुनये मोदकादिकां विशिष्टां विपुलां च भिक्षां यत्प्रयच्छन्ति स [1]निमित्तपिण्ड उच्यते । न चायं यतीनां कल्पते । आत्म-परोभयविषयाणां वधादिदोषाणामनेकेषामत्र सम्भवादिति ३ ॥

'आजीवि'त्ति आजीवनमाजीवो जीविकेत्यर्थः । [2]स पञ्चविधो–जातिविषयः, कुलविषयः, गणविषयः, कर्मविषयः, शिल्पविषयश्च । एकैकोऽपि च द्विधा–सूचयाऽसूचया च । सूचया–वचनभङ्ग-विशेषेण कथनम्, असूचया तु स्फुटवचनेनेति । तत्र साधुः सूचया असूचया च स्वजातिप्रकटनात् जातिमुपजीवति ।

[3]यथा कश्चिद्भिक्षार्थमटन् ब्राह्मणगेहं प्रविवेश । तत्र च ब्राह्मणसुतं होमादिक्रियां सम्यक्कुर्वां वीक्ष्य तज्जनकाभिमुखं स्वजातिप्रकटनाय जल्पति–यथा समिन्मन्त्रा-ऽऽहुति-स्थान-याग-काल-घोषादीनाश्रित्य सम्यगसम्यग्वा क्रिया भवेत् । तत्र पिप्पलादीनामार्द्रप्रतिशाखादिखण्डरूपाः समिधः, मन्त्राः–प्रणवादिका वर्णपद्धतयः, आहुतिः–अग्नौ घृतादेः प्रक्षेपः, स्थानम्–उत्कटुकादिः, यागः अश्वमेधादिः, कालः–प्रभातादिः, उदात्ता-ऽनुदात्तादयश्च घोषा यत्र यथावत्प्रयुज्यन्ते सा सम्यक्क्रिया,

१ निमित्तपिण्डा-मु. ॥ २ तुलना-सटीका पिण्डनिर्युक्तिः ४३७ ॥
३ द्रष्टव्या-सटीका पिण्डनिर्युक्तिः ४३९-४४० । पिण्डविशुद्धिवृत्तिः पृ. ६०B ॥

यत्र च समिधादयो न्यूनतयाऽधिकतया विपर्ययेण वा प्रयुज्यन्ते सा न सम्यक्क्रियेति। अयमपि च त्वत्पुत्रः सम्यग्होमादिक्रियाकरणाद् ज्ञायते यथा श्रोत्रियस्य पुत्र इति। यदिवा वेदादिशास्त्रपारगस्य कस्यचिदुपाध्यायस्य पार्श्वे सम्यक् पठित इति। तत एवमुक्ते स ब्राह्मणो वदति—साधो! त्वमवश्यं ब्राह्मणो येनेत्थं होमादीनामवितथत्वं जानासि। साधुश्च मौनेनावतिष्ठते। एतच्च सूचया स्वजातिप्रकटनम्, असूचया तु जात्याजीवनं पृष्टोऽपृष्टो वा आहाराद्यर्थं स्वजाति प्रकटयति यथाऽहं ब्राह्मण इति।

अत्र चानेके दोषाः, तथाहि—यदि स ब्राह्मणो भद्रकस्तर्हि स्वजातिपक्षपातात्प्रभूतमाहारादिकं तन्निमित्तं पक्त्वा ददाति, तत आधाकर्मदोषः। अथ प्रान्तस्तर्हि भ्रष्टोऽयं पापात्मा ब्राह्मण्यं परित्यक्तवानिति विचिन्त्य स्वगृहान्निष्काशनादि करोति। एवं क्षत्रियादिजातिष्वपि। एवं [1]कुलादिष्वपि ❀ भावनीयमिति ४॥

'वणीमगे'त्ति [2]'वनु याचने' वनुते प्रायो दायकाभिमतेषु श्रमणादिष्वात्मानं भक्तं दर्शयित्वा पिण्डं याचते इति [3]वनीपकः। [4]कश्चिद्यति-निंर्ग्रन्थ-शाक्य-तापस-परिव्राजकाऽऽजीवक-द्विज-प्राघूर्णक-श्वान-काक-शुकादिभक्तानां गृहिणां गृहे भिक्षां भ्रमन् प्रविष्टः, ततस्तेषां पुरतोऽशनादिलाभार्थं निर्ग्रन्थादिगुणवर्णनेनात्मानं तद्भक्तं दर्शयति। [5]तथाहि—स कदाचित्प्रविष्टो निर्ग्रन्थभक्तश्रावकगृहे

---

१ कुलाद्याजीवनार्थं द्रष्टव्या पिण्डनिर्युक्तिः ४४१ तः, पिण्डविशुद्धिवृत्तिः पृ ६१ ॥ ❀ भव० सु.॥
२ तुलना-पिण्डनिर्युक्तिवृत्तिः ४४३॥ ३ "वनिपकः पञ्चधा, तद्यथा-श्रमणे श्रमणविषयः, ब्राह्मणे, कृपणेऽतिथौ शुनि च पञ्चमो भवति।" इति पिण्डनि.वृत्तिः ४४३ ॥ ४ द्रष्टव्या पिण्डनिर्युक्तिः ४४३, ४४५ ॥
५ तुलना पिण्डविशुद्धिः पृ. ६२ A ॥

निर्ग्रन्थानाश्रित्य वदति, यथा भोः श्रावककुलतिलक ! तवैते गुरवः सातिशयज्ञानादिविभूपिता बहुश्रुताः शुद्धक्रियानुष्ठानपालनपरा विशदसामाचारीसमाचरणचमत्कृतचतुरधार्मिकजनमनसः शिवनगरमार्गसार्थवाहा इत्यादि । तथा शाक्योपासकगेहे प्रविष्टः शाक्यान् भुञ्जानानवलोक्य तदुपासकानां पुरतस्तत्प्रशंसां कुरुते, [1]यथा अहो महानुभावाः शाक्यशिष्याश्चित्रलिखिता इव निश्चलाः प्रशान्तचित्तवृत्तयो भुञ्जते । महात्मनामित्थमेव भोक्तुं युक्तम्, दयालवो दानशीलाश्चैते इत्यादि । एवं तापस-परिव्राजका-ऽऽजीवक-द्विजानप्याश्रित्य तद्गुणतद्दानप्रशंसाकरणेन वनीपकत्वं विज्ञेयम्, तथाऽतिथिभक्तानां [2]पुरत एवं वदति इह प्रायेण लोकः परिचितेषु यद्वाऽऽश्रितेषु उपकारिषु वा ददाति, यः पुनरध्वखिन्नमतिथिं पूजयति तस्यैव दानं जगति प्रधानमिति । श्वानभक्तांस्तु प्रति– [3]नैते श्वान एव किन्तु कैलाशपर्वतादागत्य यक्षा एव श्वानरूपेण पृथिव्यां सञ्चरन्ति, तत एतेषां पूजा महते हिताय भवतीति । एवं काकादिष्वपि भावनीयम् तदित्थं वनीपकत्वकरणेनोत्पादितः पिण्डो वनीपकपिण्डः ।

बहु दोपश्चायम् [4]यतो धार्मिकेऽधार्मिके वा पात्रे दानं दत्तं निष्फलं न भवतीत्येवमप्युक्तेऽपात्रदानस्य पात्रदानसमतया प्रशंसनेन सम्यक्त्वातीचारः स्यात् । किं पुनः कुपात्रानेव शाक्यादीन् साक्षात्प्रशंसतः ? । उक्तं च—

१ तुलना-"भुंजंति चित्तकम्मठिया व कारुणिय दाणरुइणो वा । " इति पिण्डनिर्युक्तिः ४४६ ॥
२ पुरतस्तत्प्रशंसंति–जे ॥ ३ तुलना-"केलासभवणा एए आगया गुज्झगा महिं । चरंति जक्खरूवेणं, पूयाऽपूया हियाऽहिया ।' इति पिण्डनिर्युक्तिः ४५२ । द्रष्टव्या पिण्डनि. वृत्तिः पृ. १३२ A । पिण्डविशुद्धिवृत्तिः पृ. ६२ ॥
४ तुलना-पिण्डविशुद्धिवृत्तिः पृ. ६२ B ॥

[1]दाणं न होइ अफलं पत्तमपत्तेसु संनिजुज्जंतं । इय भणिएऽवि य दोसो पसंसओ किं पुण अपत्ते ? ॥१॥ [पिण्डनि.४५५]

[2]एवं हि शाक्यादिप्रशंसने लोके मिथ्यात्वं स्थिरीकृतं भवति । तथाहि—साधवोऽप्यमून् प्रशंसन्ति तस्मादेतेषां धर्मः सत्य इति । तथा यदि ते शाक्यादिभक्ता भद्रका भवेयुस्तत इत्थं साधुप्रशंसामुपलभ्य तद्योग्यमाधाकर्मादि समाचरेयुः, ततस्तल्लुब्धतया कदाचित् शाक्यादिव्रतं प्रतिपद्येरन् । तथा लोके चाटुकारिण एते जन्मान्तरेऽप्यदत्तदाना आहाराद्यर्थं श्वान इवात्मानं दर्शयन्तीत्यवर्णवादः । अथ प्रत्यनीकास्तर्हि गृहनिष्काशनादि कुर्युः । तथा सर्वसावद्यनिरतानां तेषां प्रशंसने मृषावादप्राणातिपातादयोऽपि चानुमोदिताः स्युरिति ५ ॥

'चिकिच्छे'त्ति चिकित्सनम् , चिकित्सा—रोगप्रतिकारः रोगप्रतिकारोपदेशो वा, [3]सा द्विविधा-सूक्ष्मा बादरा च तत्र सूक्ष्मा औषधवैद्यज्ञापनेन, बादरा स्वयं चिकित्साकरणेन अन्यस्मात्कारणेन वा। [4]तत्र कश्चिज्ज्वरादिरोगाक्रान्तो गृही भिक्षाद्यर्थं गृहे साधुं प्रविष्टं दृष्ट्वा पृच्छति—भगवन्नेतस्य मदीयस्य व्याधेर्जानीषे कमपि प्रतीकारमिति । स प्राह—भोः श्रावक ! यादृशस्तवायं रोगस्तादृशो ममाप्येकदा सञ्जात

१ अस्या मलयगिरिसूरिकृता व्याख्या- "इह पात्रेष्वपात्रेषु वा सन्नियुज्यमानं दानं न भवत्यफलमित्यपि भणिते दोषः, अपात्रदानस्य पात्रदानसमतया प्रशंसनेन सम्यक्त्वातिचारसम्भवात्, किं पुनः अपात्राण्येव साक्षात् प्रशंसतः? तत्र सुतरां महान् दोषो, मिथ्यात्वस्थिरीकरणादिदोषभावादिति" । इति पिण्डनि.वृत्तिः पृ. १३२ B ॥

२ तुलना-पिण्डनिर्युक्तिवृत्तिः ४४७॥ ३ तुलना-"भणइ य नाहं वेज्जो, अहवावि कहेइ अप्पणो किरियं । अहवावि विज्जयाए तिविह तिगिच्छा मुणेयव्वा ॥" पिण्डनिर्युक्तिः ४५६ ॥ ४ तुलना-पिण्डविशुद्धिवृत्तिः पृ. ६३ A । द्रष्टव्या-सटीका पिण्डनि. ४५६ तः ॥

आसीत् , स चामुकेनौषधेन ममोपशमं गत इति । एवं च अज्ञस्य गृहस्थस्य रोगिणो भैषज्यकरणाभिप्रायोत्पादनादौषधसूचनं कृतम् । अथवा रोगिणा चिकित्सां पृष्टो वदति–किमहं वैद्यो ! येन रोगप्रतीकारं जाने इति । एवं चोक्ते रोगिणोऽनभिज्ञस्य सतोऽस्मिन् विषये वैद्यं पृच्छेति सूचनं कृतमिति सूक्ष्मा चिकित्सा । यदा तु स्वयं वैद्यीभूय साक्षादेव वमन-विरेचन-क्काथादिकं करोति, कारयति वाऽन्यस्मात्तदा बादरा चिकित्सेति । एवमुपकृतो हि प्रमुदितो गृही मम भिक्षां प्रकृष्टां दास्यतीति यतिरिमां द्विविधामपि कुरुते ।

न चैवं तुच्छपिण्डकृते व्रतिनां कर्तुमुचितमनेकदोषसम्भवात् , [1]तथाहि–चिकित्साकरणकाले कन्द-फल-मूलादिजीववधेन क्काथक्कथनादिपापव्यापारकरणादसंयमो भवेत् तस्य तथा नीरुक्कृतो गृहस्थस्तप्तायोगोलकसमानः प्रगुणीकृतदुर्बलान्धव्याघ्रवद् अनेकजीवघातं कुर्यात् । तथा यदि दैवदुर्योगात्साधुना चिकित्स्यमानस्यापि रोगिणो व्याधेराधिक्यं जायते, तदा कुपितस्तत्पुत्रादिराकृष्य राजकुलादौ ग्राहयेत् । तथाऽऽहारादिलुब्धा एते इत्थमित्थं च वैद्यकादि कुर्वन्तीति प्रवचनमालिन्यं स्यादिति ६ ॥

'कोहे'त्ति क्रोधः–कोपः, तद्धेतुकः पिण्डः क्रोधपिण्डः । किमुक्तं भवति ? – [2]कस्यचित्साधोः सम्बन्धिनमुच्चाटन-मारणादिकं विद्याप्रभावं शापदानादिकं तपःप्रभावं सहस्रयोधित्वादिकं बलं राजकुले वल्लभत्वं वा ज्ञात्वा, यद्वा शापदानेन कस्यचिन्मारणाद्यनर्थरूपं कोपफलं साक्षादेव दृष्ट्वा, भयाद्

१ तुलना–पिण्डविशुद्धिवृत्तिः पृ. ६३ B । द्रष्टव्या-पिण्डनिर्युक्तिः सटीका ४६० ॥
२ तुलना-सटीका पिण्डनिर्युक्तिः ४६२ । द्रष्टव्या-पिण्डविशुद्धिवृत्तिः पृ. ६३ B तः ॥

गृहस्थेन यत्तस्मै दीयते स क्रोधपिण्डः । अथवा [1]अन्येभ्यो ब्राह्मणादिभ्यो दीयमाने याचमानोऽपि साधुर्यदा न लभते तदाऽलब्धिमान् सन् कुप्येत, कुपिते च सति तस्मिन् 'साधुः कुपितो भव्यो न भवती'ति यद्दीयते स क्रोधपिण्ड इति । [2]अत्र च सर्वत्र कोप एव पिण्डोत्पादने मुख्यं कारणं द्रष्टव्यम् । विद्या-तपः-प्रभृतीनि तु तत्सहकारिकारणान्येवेति न विद्यापिण्डादिभिः सहास्य लक्षणसाङ्कर्यमाशङ्कनीयम् ७ ॥

**'माणे'**त्ति मानो—गर्वस्तद्धेतुकः पिण्डो मानपिण्डः । अयमर्थः— [3]कश्चिद्यतिः कैश्चिदपरैः साधुभिस्त्वं लब्धिमान् ज्ञास्यसे यद्यस्मानिदमिदं च भोजयिष्यसीत्यादिवचनैरुत्तेजितो न किमपि त्वया सिद्धयतीत्येवमपमानितो वा गर्वाध्मातचेताः, अथवाऽऽत्मनो लब्धि-प्रशंसादिकमपरैर्विरच्यमानमाकर्ण्य यत्र कुत्राप्यहं व्रजामि तत्र सर्वथाऽपि लभे, तथैव च जनो मां प्रशंसतीत्येवं प्रवर्धमानाभिमानमानसः कस्यापि गृहिणः पार्श्वे गत्वा तं गृहिणं तैस्तैर्वचनजातैर्दानविषयेऽभिमाने चटापयति, स च गृही तथाऽभिमानपरः शेषे कलत्रादिके निजलोके दातुमनिच्छत्यपि यदशनादिकं ददाति स मानपिण्डः ८ ॥

**'माय'**त्ति [4]माया—परवञ्चनात्मिका बुद्धिः तया, कश्चित्साधुर्मन्त्रयोगाद्युपायकुशलः सन् स्वकीय-रूपपरावर्तादिकं कृत्वा यन्मोदकादिकं पिण्डमुपार्जयति स मायापिण्डः ९ ॥

**'लोभे य'** लोभो—गृद्धिस्तेन यो गृह्यते पिण्डः स लोभपिण्डः । इयमत्र भावना—[5]कश्चित्साधुरद्याहममुकं

---

१ तुल्यप्रायम् पिण्डनिर्युक्तिवृत्तिः ४६३ ॥ २ तुल्यप्रायं पिण्डविशुद्धिवृत्तिः पृ. ६४ A ॥
३ द्रष्टव्या-सटीका पिण्डनिर्युक्तिः ४६५, सटीका पिण्डविशुद्धिः ६८ ॥ ४ द्रष्टव्या पिण्डविशुद्धिवृत्तिः प.६६ B॥
५ तुलना-सटीका पिण्डनिर्युक्तिः ४८१ । द्रष्टव्या. पिण्डविशुद्धिवृत्तिः ६९ A ॥

सिंहकेसरमोदकादिकं ग्रहीष्यामीतिबुद्धया अन्यद्वल्ल-चणकादिकं लभ्यमानमपि यन्न गृह्णाति किन्तु तदेवेप्सितं स लोभपिण्डः । अथवा पूर्वं तथाविधबुद्धयभावेऽपि यथाभावं लभ्यमानं प्रचुरं लपनश्रीप्रभृतिकं भद्रकरसमितिकृत्वा यद् गृह्णाति स लोभपिण्डः । यदिवा पायसादौ लब्धे यदि खण्ड-शर्करादिकं कुतोऽपि लभ्यते तदा भव्यतरं भवतीति कृताध्यवसायः पर्यटन् यल्लभते खण्डादिकं स लोभपिण्ड इति । इदं च क्रोधादिपिण्डचतुष्टयं साधूनां न कल्पते । प्रद्वेष-कर्मबन्ध-प्रवचनलाघवादिदोषसम्भवात् १० ॥

**'पुव्विं पच्छा संथव'** त्ति [1]संस्तवो द्विधा—वचनसंस्तवः सम्बन्धिसंस्तवश्च । तत्र वचनं—श्लाघा तद्रूपो यः संस्तवः स वचनसंस्तवः, सम्बन्धिनो—मात्रादयः श्वश्र्वादयश्च तद्रूपतया यः संस्तवः स सम्बन्धिसंस्तवः । एकैकोऽपि च द्विधा—पूर्वसंस्तवः पश्चात्संस्तवश्च । तत्र देयेऽलब्धे सति पूर्वमेव दातारं यद्गुणैर्वर्णयति स पूर्वसंस्तवः । यत्तु देये लब्धे सति दातारं गुणैर्वर्णयति स पश्चात्संस्तवः ।

इयमत्र भावना— [2]कश्चित्साधुर्भिक्षामटन् कस्मिंश्चिद् गृहे कञ्चिदीश्वरं दातारं निरीक्ष्य दानात्पूर्वमेव सत्यैरसत्यैर्वा औदार्यादिभिर्गुणैः स्तौति, यथा अहो दानपतिरस्माभिर्यः पूर्वं वार्ताभिः श्रुतः सोऽयं प्रत्यक्षेणैव वीक्षितः, तथा इतस्ततो भ्राम्यद्भिरस्माभिर्नेदृशा औदार्यादयो गुणा अपरस्य कस्यापि दृष्टाः श्रुता वा, तथा धन्यस्त्वं यस्येदृशा गुणाः सर्वत्रास्खलिताः सर्वदिग्वलयव्यापिनः प्रसरन्तीत्येवं पूर्वसंस्तवः । तथा दाने गृहिणा दत्ते सति यत् स्तौति यथा त्वदीयदर्शनेनाद्यास्माकं लोचने मनश्च शीतलमजायत, न

---

[1] तुलना-सटीका पिण्डनिर्युक्तिः ४८४ । द्रष्टव्या-पिण्डविशुद्धिः प. ७० A ॥

[2] तुलना—पिण्डविशुद्धिवृत्तिः प. ७० । द्रष्टव्या-पिण्डनिर्युक्तिः ४६०-४६३ ॥

चेदमद्भुतम्, यतो दातरि गुणिनि च दृष्टे कः प्रमोदभाङ् न भवति ?, इत्येष पश्चात्संस्तवः। उभयरूपेऽपि चास्मिन् संस्तवे माया-मृषावादा-ऽसंयतानुमोदनादयो दोषा भवेयुरिति।

तथा [1]माता-पित्रादिरूपतया यः संस्तवः—परिचयः स पूर्वसम्बन्धिसंस्तवः, मात्रादीनां पूर्वकालभावित्वात्, यस्तु श्वश्रू-श्वशुरादिरूपतया संस्तवः स पश्चात्सम्बन्धिसंस्तवः, श्वश्र्वादीनां पश्चात्कालभावित्वात्। तत्र कश्चित्साधुर्भिक्षार्थं कस्मिंश्चिद् गृहे प्रविष्टः सन्नाहारलम्पटतया आत्मवयः परवयश्च ज्ञात्वा तदनुरूपं सम्बन्धं घटयति, तथाहि—यदि च सा वयोवृद्धा स्वयं च मध्यमवयास्तदा तां निजमात्रादिसमानां महेलामालोक्य मातृस्थानेन मनागश्रुविमोचनं विधत्ते, ततः सा पृच्छति—साधो! किं त्वमधृतो दृश्यसे ?, साधुरपि प्राह-मम त्वत्सदृशी माताऽभूत्। यदि पुनः साऽपि मध्यमवयास्तदा ममेदृशी स्वमाऽभूदिति वदति। अथ सा बालवयास्ततो ममेदृशी दुहिता आसीदित्यादि भाषते इति। एवं पश्चात्संस्तवेऽपि भावना कार्या।

अत्रापि च बहवो [2]दोषाः। तथाहि—ते गृहिणो यदि भद्रकास्तदा साधौ प्रतिबन्धो भवेत्। प्रतिबन्धे च सत्याधाकर्मादिकं कृत्वा दद्युः। अथ प्रान्तास्तर्हि अयमस्माकं स्वस्य कार्पटिकप्रायस्य जनन्यादिकल्पनेनापभ्राजनां विधत्ते, तत एवं विचिन्त्य स्वगृहान्निष्काशनादि कुर्युः। अधृत्या अश्रुमोचनादि कुर्वन् मायावी एषोऽस्माकमावर्जननिमित्तं चाटूनि करोतीति निन्दा चेति। तथा ममेदृशी

१ तुलना-पिण्डनिर्युक्तिवृत्तिः गाथा ४८५ तः। द्रष्टव्या पिण्डविशुद्धिवृत्तिः गाथा ७२ ॥
२ द्रष्टव्या पिण्डनिर्युक्तिवृत्तिः प. १४० B ॥

माता आसीदित्युक्ते मृतस्य पुत्रस्य स्थानेऽयं मे पुत्र इति बुद्ध्या तस्मै स्वस्नुषादि दानं कुर्यात्। श्वश्रूरीदृशी ममासीदित्युक्ते च विधवां कुरण्डां वा निजसुतां दद्यादित्यादयश्च दोषाः। ततः संस्तवपिण्डो यतीनां न कल्पत इति ११ ॥

'विज्जा-मंते'त्ति द्वारद्वयं प्रतिपाद्यते। तत्र विद्या—प्रज्ञप्त्यादि स्त्रीरूपदेवताधिष्ठिता जप-होमादि-साध्या वा अक्षरविशेषपद्धतिः। पुरुषरूपदेवताधिष्ठिता पाठमात्रसिद्धा वाऽक्षरविशेषपद्धतिर्मन्त्रः। तद्व्यापारणेन य उपार्ज्यते पिण्डः स विद्यापिण्डो मन्त्रपिण्डश्च। दोषाश्चात्र— [1]यो विद्ययाऽभिमन्त्रितः सन् दानं दाप्यते स स्वभावस्थो जातः कदाचित् प्रद्विष्टोऽन्यो वा तत्पक्षपाती प्रद्विष्टः सन् प्रतिविद्यया स्तम्भनोच्चाटन मारणादि कुर्यात् तथा विद्यादिना परद्रोहकरणरूपेण जीवनशीलाः शठाश्चैते इति लोके जुगुप्सा। तथा कार्मणकारिण इमे इति राजकुले ग्रहणा-ऽऽकर्षण-वेषपरित्याजन-कदर्थन-मारणादीनि कुर्यादित्यादयः १२-१३ ॥

'चुण्णजोगे' इति द्वारद्वयम्, तत्र चूर्णो—नयना-ऽञ्जनादिरन्तर्धानादिफलः, योगः—पादप्रलेपादिः सौभाग्यदौर्भाग्यकरः, एतद्व्यापारणेन य उपार्ज्यते पिण्डः स चूर्णपिण्डो योगपिण्डश्च। दोषाश्चात्रापि पूर्ववत्।

[2]ननु चूर्ण-योगयोर्द्वयोः क्षोदरूपत्वे सति परस्परं को विशेषः? येन योगद्वारं पृथगुच्यते,

---

१ तुलना-पिण्डनि. वृत्तिः ४१७ ॥ २ तुलना—"अथ चूर्णस्य वासानां च परस्परं कः प्रतिविशेषो ? द्वयोरपि क्षोदरूपत्वात्, उच्यते, सामान्यद्रव्यनिष्पन्नः शुष्क आर्द्रो वा क्षोदश्चूर्णः, सुगन्धद्रव्यनिष्पन्नाश्च शुष्कपेषम्पिष्टा वासाः, इतरे चानाहार्या योगाः पादप्रलेपनादयः।", इति पिण्डनिर्युक्तिवृत्तिः पृ. १४३ B ॥

सत्यमेतत्, परं कायस्य बहिरुपयोगी चूर्णः, बहिरन्तश्चोपयोगी योग इति । यतोऽसावभ्यवहार्यो-ऽनाहार्यभेदाद् द्विविधो भवेत्, तत्र जलपानादिना अभ्यवहार्यः-आहार्यः, पादप्रलेपादिश्चेतर इति अनयोर्विशेषः १४-१५॥

**'उप्पायणाय दोसा सोलसमे मूलकम्मे य'** इति एतेऽनन्तरोक्ता उत्पादनाया दोषाः, षोडशो दोषो मूलकर्म- [1]अतिगहनभववनस्य मूलं-कारणं प्ररोहहेतुः कर्म-सावद्यक्रिया, ततो मूलं च तत्कर्म च मूलकर्म, तत्र गर्भस्तम्भन-गर्भाधान-गर्भपाता-ऽक्षतयोनित्वकरण-क्षतयोनित्वकरणादिना य उपार्ज्यते पिण्डः स मूलकर्मपिण्डः । अयं च साधूनां न कल्पते, प्रद्वेष-प्रवचनमालिन्य-जीवघाताद्य-नेकदोषसम्भवात् । तथाहि-गर्भस्तम्भने [2]गर्भशातने च साधुना कृते ज्ञाते सति प्रद्वेषो भवति, ततः शरीरस्यापि विनाशः, गर्भाधाना-ऽक्षतयोनित्वकरणयोश्च यावज्जीवं मैथुनप्रवृत्तिः, गर्भाधानाद्धि पुत्रोत्पत्तौ प्राय इष्टा भवति, क्षतयोनित्वकरणे पुनर्भोगान्तरायादीनि १६ ॥५६७॥

उक्ताः षोडशाप्युत्पादनादोषाः, अथ दश एषणादोषानाह-

**संकिय १ मक्खिय २ निक्खित्त ३ पिहिय ४ साहरिय ५ [3]दायगु ६ म्मिस्से ७ ।**
**अपरिणय ८ लित्त ९ छड्डिय १० एसणदोसा दस हवंति ॥५६८॥** [पिण्डनि. ५२०]

१ तुलना-पिण्डविशुद्धिः गाथा ७५ ॥ २ तुलना-पिण्डनिर्युक्तिवृत्तिः पृ. १४५ B ॥
३ दायगुमिस्से-मु. । दायगुम्मीस्से-इति पिण्डनिर्युक्तौ (५२०), , पिण्डविशुद्धौ (७७), पञ्चाशके (१३।२६) पाठः ॥

'संकिय मक्खिय'माह 'शङ्कितं–सम्भाविताधाकर्मादिदोषम् , तत्र च चतुर्भङ्गी–ग्रहणे शङ्कितो भोजने चेति प्रथमो भङ्गः १, ग्रहणे शङ्कितो न भोजने इति द्वितीयः २, भोजने शङ्कितो न ग्रहणे इति तृतीयः ३, न ग्रहणे नापि भोजने इति चतुर्थः ४, तत्राद्येषु त्रिषु भङ्गेषु षोडशोद्गमदोष-नवैषणादोषरूपाणां पञ्चविंशतिदोषाणां मध्ये येन दोषेण शङ्कितं भवति तं दोषमाप्नोति। किमुक्तं भवति ?–यदा आधाकर्मत्वेन शङ्कितं गृह्णाति भुंक्ते वा तदा आधाकर्मदोषेण सम्बध्यते, यदि पुनरौद्देशिकत्वेन तत औद्देशिकेनेत्यादि। चतुर्थे तु भङ्गे वर्तमानः शुद्धो, न केनापि दोषेण सम्बध्यते इत्यर्थः।

एतेषां चैवं सम्भवः– [1]यथा कोऽपि साधुः स्वभावतो लज्जावान् भवति। तत्र क्वापि गृहे स भिक्षार्थं प्रविष्टः सन् प्रचुरां भिक्षां लभमानः स्वचेतसि शङ्कते–किमत्र प्रचुरा भिक्षा दीयते ?, न च लज्जया प्रष्टुं शक्नोति, तत एवं शङ्कया गृहीत्वा शङ्कित एव तद् भुङ्क्ते इति प्रथमभङ्गवर्ती। तथा भिक्षार्थं गतः कोऽपि साधुः क्वापि गेहे तथैव शङ्कितमनाः प्रचुरां भिक्षामादाय स्ववसतिमागमत्, ततो भोजनसमये तं दोलायमानमानसं समालोक्य कश्चिदपरसाधुर्विज्ञातभिक्षादायिगृहव्यतिकरस्तदभिप्रायं ज्ञात्वा भणति–भो साधो ! यत्र त्वया विपुला भिक्षा लब्धा तद्गृहेऽद्य महत्प्रकरणं वर्तते लाभनकं वा महत्कुतोऽप्यागतमित्येवं तद्वचः श्रुत्वा शुद्धमेतदिति निश्चित्य विगतशङ्कस्तद् भुङ्क्ते इति द्वितीयभङ्गवर्ती। तथा कश्चित्साधुरीश्वरगेहाच्छिःशङ्कितः प्रचुरां भिक्षां गृहीत्वा वसतावागतोऽन्यान् साधून् गुरोः पुरतः

१ तुलना–पिण्डनिर्युक्तिवृत्तिः पृ. १४७ A। द्रष्टव्या–पिण्डविशुद्धिवृत्तिः पृ.८१ ॥
२ तुलना–पिण्डनिर्युक्तिवृत्तिः पृ.१४७। द्रष्टव्या–पिण्डविशुद्धिवृत्तिः गाथा ७८ ॥

स्वभिक्षातुल्यां भिक्षामालोचयतः श्रुत्वा सञ्जातशङ्कश्चिन्तयति—यथा यादृश्येव मया भिक्षा प्रचुरा लब्धा तादृश्येवान्यैरपि सङ्घाटकैः तन्नूनमेतदाधाकर्मादिदोषदुष्टं भविष्यतीति भुञ्जानस्तृतीयभङ्गवर्ती १ ॥

'मक्खिय' त्ति [1]म्रक्षितं—पृथिव्यादिनाऽवगुण्ठितम्, तद् द्विधा—सचित्तम्रक्षितमचित्तम्रक्षितं च। तत्र सचित्तम्रक्षितं त्रिविधं—पृथिवीकायम्रक्षितम्, अप्कायम्रक्षितम्, वनस्पतिकायम्रक्षितं च। तत्र शुष्केणार्द्रेण वा सचित्तपृथिवीकायेन देयं मात्रकं हस्तो वा यदि म्रक्षितो भवति तदा सचित्तपृथ्वीकाय-म्रक्षितम्, अप्कायम्रक्षिते चत्वारो भेदाः—पुरःकर्म, पश्चात्कर्म, सस्निग्धम्, उदकार्द्रं च। तत्र भक्तादेर्दानात्पूर्वं यत् साध्वर्थं कर्म हस्त—मात्रादेर्जलप्रक्षालनादि क्रियते तत्पुरःकर्म, यत्पुनर्भक्तादेर्दानात् पश्चात्क्रियते तत्पश्चात्कर्म, सस्निग्धम्—ईषल्लक्ष्यमाणजलखरण्टितं हस्तादि, उदकार्द्रं—स्फुटोपलभ्यमान-जलसंसर्गम्, तथा चूतफलादीनां सद्यःकृतैः श्लक्ष्णखण्डैः खरण्टितं यद्धस्तादि तद्वनस्पतिकायम्रक्षितम्, शेषैस्तु तेजः समीर-त्रसकायैर्म्रक्षितं न भवति। तेजस्कायादिसंसर्गेऽपि लोके म्रक्षितशब्दप्रवृत्त्यदर्शनात्।

अचित्तम्रक्षितं पुनर्द्विविधं—गर्हितमितरच्च, गर्हितं वसादिना लिप्तम्, इतरत् घृतादिना। इह च सचित्त-म्रक्षितं तावत् साधूनां सर्वथा न कल्पते। अचित्तम्रक्षितं तु लोकानिन्दितेन घृतादिना म्रक्षितं कल्पते। [2]निन्दितेन पुनर्वसादिना म्रक्षितं न कल्पते एवेति २ ॥

'निक्खित्त'त्ति [3]निक्षिप्तं—सचित्तस्योपरि स्थापितम्। तच्च पृथिव्यप्तेजो-वायु-वनस्पति-त्रसनिक्षिप्त-

१ म्रक्षितस्य तुलना-सटीका पिण्डनिर्युक्तिः ५३१-५३७ ॥ २ निन्दितेन- जे. नास्ति ॥ ३ "तुलना सचित्तमीसएसु दुविह काएसु होइ निक्खित्तं। एक्केक्क तं दुविहं अणंतरं परंपरं चेव।" इति पिण्डनिर्युक्तिः ५४० ॥

भेदेन षोढा पुनरेकैकं द्विधा—अनन्तरं परम्परं च । अनन्तरं—अव्यवधानेन, परम्परं च—व्यवधानेन । तत्र सचित्ते—मृदादौ यत् [1]पक्कान्न-मण्डकादिकमानन्तर्येण व्यवस्थापितं तदनन्तरनिक्षिप्तम् सचित्तमृदादेरेवोपरिस्थिते पिठरकादौ यन्निक्षिप्तं पक्कान्नादि तत् परम्परनिक्षिप्तम् । तथा यन्नवनीत-स्त्यानीभूतघृतादिकं सचित्ते उदके निक्षिप्तं तदनन्तरनिक्षिप्तम् , तदेव नवनीतादि पक्कान्नादि वा जलमध्ये स्थितेषु नावादिषु स्थितं परम्परनिक्षिप्तम् । तथा वह्नौ पर्पटादि यत्प्रक्षिप्यते तदनन्तरनिक्षिप्तम् , यत्पुनरग्नेरुपरि स्थापिते पिठरादौ क्षिप्तं तत्परम्परनिक्षिप्तम् , तथा [2]वातोत्पाटिताः शालिपर्पटकादयोऽनन्तरनिक्षिप्तम् , यद् येनोत्पाटयते तत्तत्र निक्षिप्तमुच्यते इति विवक्षया, परम्परनिक्षिप्तं तु पवनापूरितदृत्याद्युपरिस्थितमण्डकादि, तथा वनस्पत्यनन्तरनिक्षिप्तं सचित्तव्रीहिकाफलादिषु पूपमण्डकादि न्यस्तम् , परम्परनिक्षिप्तं तु हरितादीनामेवोपरिस्थितेषु पिठरादिषु निक्षिप्ता अपूपादयः । तथा त्रसेऽनन्तरनिक्षिप्तं बलीवर्दादिपृष्ठेऽपूपमोदकादयो निक्षिप्ताः, परम्परनिक्षिप्तं तु बलीवर्दादिपृष्ठनिवेशितकुतुपादिभाजनेषु निक्षिप्ता घृत-मोदकादय इति ।

अत्र च पृथिव्यादिषु सर्वेष्वप्यनन्तरनिक्षिप्तं देयं वस्तु यतीनामकल्पनीयमेव, सचित्तपृथिवीकायाद्युपरिस्थितत्वेन सङ्घट्टादिदोषसम्भवात् । परम्परनिक्षिप्तं पुनः सचित्तसङ्घट्टादिपरिहारेण यतनया [3]ग्राह्यमपीति, [4]केवलं तेजस्काये परम्परनिक्षिप्तस्य ग्रहणमाश्रित्य विशेषः प्रतिपाद्यते—यथेक्षुरसः पाकस्थाने अग्ने-

१ तुलना-पिण्डनिर्युक्तिवृत्तिः ५४८ । पिण्डविशुद्धिः पृ. ८५ A ॥ २ तुलना-पिण्डनिर्युक्तिवृत्तिः पृ. १५४ । पिण्डविशुद्धिवृत्तिः पृ. ८५ B ॥ ३ ग्राह्यमपीति सम्प्रदायः- इति 'पिण्डनि वृत्तौ पृ. १५४ B ॥ ४ तुलना-पिण्डविशुद्धिवृत्तिः पृ. ८६ ॥

रुपरिस्थिते कटाहादौ यदि कटाहः [1]सर्वतः पार्श्वेषु मृत्तिकयाऽवलिप्तो भवति, दीयमाने चेक्षुरसे यदि परिशाटिर्नोपजायते, सोऽपि च कटाहो यदि विशालमुखो भवति, सोऽपि चेक्षुरसोऽचिरक्षिप्त इतिकृत्वा यदि नात्युष्णो भवति, तदा स दीयमान इक्षुरसः कल्पते । इह यदि दीयमानस्येक्षुरसस्य कथमपि विन्दुर्बहिः पतति तर्हि स लेप एव वर्तते, न तु चुल्लीमध्यस्थिततेजस्कायमध्ये पतति, ततो मृत्तिकयाऽवलिप्त इत्युक्तम्, तथा विशालमुखादाकृष्यमाण उदश्वनः पिठरस्य कर्णे न लगति, ततो न पिठरस्य भङ्ग इति न तेजस्काय-विराधनेत्यतो विशालमुख इत्युक्तम् । [2]तथा अत्युष्णो इक्षुरसादौ दीयमाने यस्मिन् भाजने तदत्युष्णं गृह्णाति तेन तप्तं सद् भाजनं हस्तेन साधुर्गृह्णन् दह्यते इत्यात्मविराधना, [3]येनापि स्थानेन सा दात्री ददाति तेनाप्यत्युष्णेन सा दह्यते, अन्यच्च—अत्युष्णमिक्षुरसादि कष्टेन दात्री दातुं शक्नोति, कष्टेन च दाने कथमपि साधुसम्बन्धिभाजनाद्बहिरुज्झने हानिर्दीयमानस्येक्षुरसादेस्तस्य च भाजनस्य, साधुना वसतावानयनायोत्पाटितस्य पतद्ग्रहादेः दात्र्या वा दानायोत्पाटितस्योदश्वस्य [4]गण्डरहितस्या-त्युष्णतया झगिति भूमौ मोचने भङ्गः स्यात्, तथा च षड्जीवनिकायविराधनेति संयमविराधना चेत्येतो-ऽनत्युष्णमित्युक्तम् ३ ॥

---

१ तुलना-' पासोलित्त कडाहे परिसाडी नत्थि तपि य विसालं । सोवि य अचिरच्छूढो उच्छुरसो नाइउसिणो य' इति । पिण्डनिर्युक्तिः ५५२ । अत्रस्था वृत्तिरपि तुलनीया ॥ २ तुलना-"दुविहविराहण उसिणे छड्डुण हाणी य भाण भेओ य" पिण्डनि.५५६ । अत्रस्था वृत्तिरपि तुलनीया ॥ ३ "येनापि स्थापितेन स्थानेन" इति पिण्डनि वृत्तौ पृ १५४ A । येनापि स्थानेन [दर्व्यादिना]-मु० ॥ ४ दण्डरहित० मु । गण्डरहित० इति पिण्डनि. वृत्ति पृ. १५४A ॥

'पिहिय'त्ति पिहितं-सचित्तेन स्थगितम्, तदपि षोढा पृथिवीकायादिपिहितभेदात् एकैकमपि द्विधा अनन्तरं परम्परं च । [1]तत्र सचित्तपृथिवीकायेनावष्टब्धं मण्डकादि सचित्तपृथ्वीकायानन्तर-पिहितम्, सचित्तपृथिवीकायगर्भपिठरादिपिहितं सचित्तपृथिवीकायपरम्परपिहितम् । तथा हिमादिना-ऽवष्टब्धं मण्डकादिकं सचित्ताप्कायानन्तरपिहितम्, हिमादिगर्भपिठरादिना पिहितं सचित्ताप्कायपरम्पर-पिहितम् । तथा स्थाल्यादौ संस्वेदिमादीनां मध्ये अङ्गारं स्थापयित्वा हिङ्ग्वादिवासो यदा दीयते तदा तेनाङ्गारेण केषाञ्चित्संस्वेदिमादिनां संस्पर्शोऽस्तीति तेजस्कायानन्तरपिहितम्, एवं चनकादिकमपि मुर्मु-रादिक्षिप्तमनन्तरपिहितमवगन्तव्यम्, अङ्गारभृतेन शरावादिना स्थगितं पिठरादि [2]परम्परपिहितम्, तथा तत्रैवाङ्गारधू[3]पितादौ अव्यवहितमनन्तरपिहितं वायौ द्रष्टव्यम्, [4]'यत्राग्निस्तत्र वायु'रिति वचनात्, समीरण-भृतेन तु वस्तिना पिहितं परम्परपिहितम्, तथा फलादिना अतिरोहितेन पिहितं वनस्पत्यनन्तरपिहितम् फलभृच्छब्बकादिना पिहितं परम्परपिहितम् । तथा मण्डक-मोदकादिकमुपरिसञ्चरत्पिपीलिकापङ्क्तिकं [5]त्रसा-नन्तरपिहितम्, कीटिकाद्याकीर्णेन तु शरावादिना पिहितं त्रसपरम्परपिहितमिति ।

तत्र च पृथिवीकायादिभिरनन्तरपिहितं न कल्पत एव यतीनाम्, सङ्घट्टादिदोषसंभवात्,

१ तुलना-पिण्डनिर्युक्तिवृत्तिः पृ.१५५। द्रष्टव्या पिण्डविशुद्धिवृत्तिः गाथा ८२॥ २ परम्परया पिहितं-जे.। परम्परपिहितं-पिण्डनि. वृत्तिः ३ ०धूपनादौ मु.। धूपितादौ इति पिण्डनि वृत्तिः पृ. १५५ B ॥ ४ वायोः-पिण्डनि.वृत्तिः पृ १५५ B ॥ ५ तुलना—"त्रसकायविषये कच्छपेन सञ्चारादिना च कीटिकापङ्क्त्यादिना यत्पिहितं तदनन्तर-पिहितम्, कच्छपसञ्चारादिगर्भपिठरादिना पिहितं परम्परपिहितम्।" इति पिण्डनि. वृत्तिः पृ. १५५ B ॥

परम्परपिहितं तु यतनया ग्राह्यमपि । [1]तथा अचित्तेनाप्यचित्ते देये वस्तुनि पिहिते चतुर्भङ्गी, यथा—गुरुकं गुरुकेण पिहितम् १, गुरुकं लघुकेन २, लघुकं गुरुकेण ३, लघुकं लघुकेन ४, तत्र च प्रथम-तृतीययोर्भङ्गयोरग्राह्यम्, गुरुद्रव्यस्योत्पाटने हि कथमपि तस्य पाते पादादिभङ्गसम्भवात् । द्वितीय-चतुर्थयोस्तु ग्राह्यमुक्तदोषाभावात् । देयवस्त्वाधारस्य पिठरादेगुरुत्वेऽपि ततः करोटिकादिना दानसम्भवात् ४ ॥

'साहरिय' त्ति संहृतम्—अन्यत्र प्रक्षिप्तम्, तत्र [2]येन करोटिकादिना कृत्वा भक्तादिकं दातुमिच्छति दात्री तत्रान्यददातव्यं किमपि सचित्तमचित्तं मिश्रं वाऽस्ति, ततस्तददेयमन्यत्र स्थानान्तरे क्षिप्त्वा तेन ददाति एतत्संहृतमुच्यते । तच्चादेयं कदाचित्सचित्तेषु पृथिव्यादिषु मध्ये क्षिपति, कदाचिदचित्तेषु, कदाचिन्मिश्रेषु, [3]तदा मिश्रस्य सचित्त एवान्तर्भावात्सचित्ता-ऽचित्तपदाभ्यां चतुर्भङ्गी, यथा सचित्ते सचित्तं संहृतम् १, सचित्ते अचित्तम् २, अचित्ते सचित्तम् ३, अचित्ते अचित्तमिति ४ । तत्राद्येषु त्रिषु भङ्गेषु सचित्तसङ्घट्टादिदोषसम्भवान्न कल्पते, चतुर्थे भङ्गे तु तथाविधदोषासम्भवे सति कल्पतेऽपीति । अत्राप्यनन्तर-परम्परप्ररूपणा पूर्ववत्कर्तव्या, यथा सचित्तपृथिवीकायमध्ये यदा संहरति तदाऽनन्तरसचित्त-



---

१ तुलना—"गुरु गुरुणा गुरु लहुणा लहुयं गुरुएण दोऽवि लहुयाइं । अचित्तेणवि पिहिए चउभंगो दोसु, अगेज्झं । इति पिण्डनि. ५६२ । अत्रस्था वृत्ति तुल्यप्राया । पिण्डविशुद्धिवृत्ति' गाथा ८२ ॥ २ तुलना पिण्डनिर्युक्तिवृत्तिः ५६३ । द्रष्टव्या पिण्डविशद्धिवृत्तिः ८३ ॥ ३ तदा-मु । तुलना-पिण्डविशुद्धिवृत्तिः ८३ । पिण्डनिर्युक्तिवृत्तौ तु-"ततः संहरणे सचित्ताद्यधिकृत्य....तिस्रश्चतुर्भङ्ग्यो भवन्तीत्यर्थः, तथाहि एका चतुर्भङ्गी सचित्त-मिश्रपदाभ्याम्, द्वितीया सचित्ता-ऽचित्तपदाभ्याम्, मिश्राऽचित्तपदाभ्या तृतीयेति ।" इति पृ १५६ A ॥

पृथिवीकायसंहृतम् , यदा तु सचित्तपृथिवीकायस्योपरिस्थिते पिठरादौ संहरति तदा परम्परसचित्तपृथिवीकायसंहृतम् । एवमप्कायादिष्वपि भावनीयम् । अनन्तरसंहृते न ग्राह्यम् , परम्परसंहृते तु सचित्तपृथिवीकायाद्यसङ्घट्टने ग्राह्यमिति ९ ॥

'दायग' त्ति दायकदोपदुष्टम् , दायकश्चानेकप्रकारः, [1]तथाहि—स्थविरः १, अप्रभुः २, नपुंसकः ३, कम्पमानकायः ४, ज्वरितः ५, अन्धः ६, बालः ७, मत्तः ८, उन्मत्तः ९, छिन्नकरः १०, छिन्नचरणः ११, गलत्कुष्ठः १२, बद्धः १३, पादुकारूढः १४, तथा कण्डयन्ती १५, पिंषन्ती १६, भर्जमाना १७, कृन्तन्ती १८, लोढयन्ती १९, विक्षणुवती २०, पिञ्जयन्ती २१, दलयन्ती २२, विरोलयन्ती २३, भुञ्जाना २४, आपन्नसत्त्वा २५, बालवत्सा २६, षट् कायान् सङ्घट्टयन्ती २७, तानेव विनाशयन्ती २८, सप्रत्यपाया २९ चेति, तत एवमादिस्वरूपे दातरि ददति न कल्पते ।

[2]तत्र स्थविरः सप्ततिवर्षाणां मतान्तरापेक्षया षष्टिवर्षाणां वोपरिवर्ती, [3]स च प्रायो गलल्लालो

---

१ तुलना- "थेरऽपहु-पड-वेविर-जरियंध-ऽव्वत्त-मत-उम्मत्ते । कर-चरणछिन्न-पगलिय-नियलंडु-य पाउयारूढो ॥ खंडइ पीसइ भुंजइ कत्तइ लोढेइ विक्किणइ । पिंजे दलइ विरोलइ, जेमइ जा गुव्विणि बालवच्छा य ॥ तह छक्काए गिण्हइ, घट्टइ आरंभइ खिवइ दट्ठु जइं । साहारणचोरियगं देइ परक्कं परट्ठं वा ॥ ठवइ बलिं उव्वत्तइ, पिठराइ तिहा सपच्चवाया जा । देंतेसु एवमाइसु ओघेण मुणी न गिण्हन्ति ।" इति पिण्डविशुद्धिः ८५-८८ । पिण्डनिर्युक्तिः ५७२-५७७ द्रष्टव्या ॥ २ तुलना-पिण्डनिर्युक्तिवृत्तिः प.१५८ A । सर्वेषां दायकानां तुलना—पिण्डविशुद्धिः सटीका ८५-८८ ॥

३ तुल्यप्रायं पिण्डनिर्युक्तौ प. १५९ B ॥

भवति, ततो देयमपि वस्तु लालया खरण्टितं भवतीति तद्ग्रहणे लोके जुगुप्सा। तथा कम्पमानहस्तश्च भवति, ततो हस्तकम्पनवशाद्देयं वस्तु भूमौ निपतति, तथा च षट्जीवनिकायविराधना तथा स्वयं वा स्थविरो ददत् निपतेत्, तथा सति तस्य पीडा भूम्याश्रितषड्जीवनिकायविराधना च १ ।अपि च-प्रायः स्थविरो गृहस्याप्रभुर्भवति, ततस्तेन दीयमाने कोऽधिकारोऽस्य वृद्धस्य दाने इति विचिन्त्य गृहे स्वामित्वेन नियुक्तस्य प्रद्वेषः स्यात्, [1]तथा वृद्धोऽपि यदि प्रभुर्भवति कम्पमानश्च यद्यन्येन विधृतो वर्तते स्वरूपेण वा दृढशरीरो भवति तर्हि ततः कल्पते २ ।

[2]तथा नपुंसकादभीक्ष्णं भिक्षाग्रहणे अतिपरिचयात्तस्य नपुंसकस्य साधोर्वा वेदोदयो भवेत्, ततो नपुंसकस्य [3]साध्वालिङ्गनाद्यासेवनेन द्वयस्यापि कर्मबन्धः, तथा अहो एते नपुंसकादपि निकृष्टात् गृह्णन्तीति जननिन्दा भवेत्, [4]अपवादतस्तु वर्धितक-चिप्पित-[5]मन्त्रोपहत-ऋषिशप्त-देवशप्तादिषु केषुचिदप्रतिसेविषु नपुंसकेषु ददत्सु गृह्यतेऽपि भिक्षेति ३ । तथा [6]कम्पमानकायोऽपि भिक्षादानसमये देयमानयन् भूमौ परिशाटयेत् तथा साधुभाजनाद्बहिर्भिक्षां क्षिपेत् देयमात्रकं वा पातनेन स्फोटयेदिति, सोऽपि च यदि दृढभिक्षाभाजनग्राही भवेत् पुत्रादिभिर्वा दृढहस्तो भिक्षां दाप्यते तदा ततोऽपि गृह्यते ४ ।

---

१ द्रष्टव्या-पिण्डविशुद्धिवृत्तिः प. ८८ A। सर्वेषामपवादानां तुलना-पिण्डनि.वृत्तिः ५९७ तः ॥ २ तुलना-पिण्डनिर्युक्तिवृत्तिः ५८५ ॥ ३ 'साधुलिङ्गाद्यासेवनेन'-इति पिण्डनि.वृत्तौ (५८५) पाठः ॥ ४ तुलना-पिण्डविशुद्धिवृत्तिः पृ ८८ A ॥ ५ ०मन्त्रोपहतौषध्युपहतऋषि० इति पिण्डवि. वृत्तिः प. ८८ A ॥ ६ कम्पमानकाय-ज्वरिता-ऽन्धानां तुलना-पिण्डनिर्युक्तिवृत्तिः ५८२-५८३ ॥

एवं ज्वरितेऽपि दोपा भावनीयाः। किञ्च-ज्वरिताद्भिक्षाग्रहणे ज्वरसङ्क्रमणमपि साधोर्भवेत्, तथा जने उड्डाहो यथा अहो अमी आहारलम्पटा यदित्थं ज्वरपीडितादपि गृह्णन्ति, अथासञ्चरिष्णुर्ज्वरो भवेत्तदा यतनया कदाचिद् गृह्यतेऽपीति ५।

तथा अन्धाद्भिक्षाग्रहणे उड्डाहः, स चायं-अहोऽमी औदरिका यदन्धादपि भिक्षां च दातुमशक्नुवतो भिक्षां गृह्णन्तीति, [1]तथा अन्धोऽपश्यन् पादाभ्यां भूम्याश्रितषड्जीवनिकायघातं विदधाति। तथाऽन्धो लेष्ट्वादौ स्खलितः सन् भूमौ निपतेत्, तथा च सति भिक्षादानायोत्पाटितहस्तगृहीतस्थाल्यादेर्भङ्गः स्यात्, साधुपात्रकाद् बहि क्षपणे च परिशाटिर्भवेदिति। सोऽपि पुत्रादिना धृतहस्तो यदि दद्यात्तदा यतनया गृह्यते ६।

तथा [2]बालो-जन्मतो वर्षाष्टकाभ्यन्तरवर्ती तस्मिन् देयमानमजानति मात्राद्यममक्षमतिप्रभूतां भिक्षां ददति अहो लुण्टाका एते न साधुसद्वृत्ता इत्युड्डाहो भवेत्, मात्रादीनां व्रतिनामुपरि द्वेषश्च सञ्जायते। यदि च मात्रादिभिः कार्यवशादन्यत्र गच्छद्भिर्बालकस्य कथितमिदमिदं च व्रतिनामत्रागतानां त्वया देयमिति, यदि च जनन्याद्यनुपदिष्टेऽपि स्तोकमेव किञ्चिद्ददाति बालकस्तदा तेनापि दीयमानं गृह्यते। एवं मात्रादिभिः क्रियमाणस्य कलहादेरभावादिति ७।

तथा मत्तः-पीतमदिरादिः, स च भिक्षां ददत् [3]कदाचिन्मत्ततया साधोरालिङ्गनं विदधाति, भाजनं वा भिनत्ति, यद्वा कदाचिद्भिक्षां ददानः पीतमासवं वमति, वमंश्च साधुं साधुपात्रं वा खरण्टयति, ततो



१ तुलना-पिण्डविशुद्धिवृत्तिः पृ ८८ B ॥ २ तुलना-पिण्डविशुद्धिवृत्तिः पृ. ८८ B ॥
३ मत्तोन्मत्तयोः तुलना-पिण्डनिर्युक्तिवृत्तिः ५८१ ॥

लोके जुगुप्सा–धिगमी साधवोऽशुचयो ये मत्तादपीत्थं भिक्षां गृह्णन्तीति। तथा कोऽपि मत्तो मदविह्वलतया रे मुण्ड ! किमत्रायातस्त्वमिति ब्रुवन् घातमपि विदधाति ८ ।

तथा उन्मत्तो–दृप्तो ग्रहगृहीतो वा, तस्मिन्नप्येत एवालिङ्गनादयो दोषा वमनवर्जा भावनीया इति । तथा मत्तोऽपि यदि भद्रकोऽलक्ष्यमदश्च भवति यदि च सागारिकः कोऽपि तत्र तथाविधो न विद्यते तर्हि तद्धस्तात् कल्पते नान्यथा । उन्मत्तोऽपि चेत् शुचिर्भद्रकश्च भवति तदा कल्पत इति ९ ।

तथा छिन्नकरो [1]मूत्राद्युत्सर्गादौ जलशौचाद्यभावादशुचिरेव, तेन च दीयमाने जनो निन्दां करोति । तथा हस्ताभावे येन भाजनेन कृत्वा भिक्षां दादति यद्वा देयं वस्तु तस्य पतनमपि भवति, तथा च सति षड्जीवनिकायव्याघातः । तथा छिन्नचरणेऽप्येत एव दोषा द्रष्टव्याः, केवलं पादाभावात्तस्य भिक्षादानाय चलतः प्रायो नियमतः पतनं भवेत् ; तथा च सति भूम्याश्रितपिपीलिकाप्रभृतिप्राणिप्रणाशः, छिन्नकरोऽपि यदि सागारिकाभावे ददाति तदा यतनया गृह्यते, छिन्नचरणोऽपि च यद्युपविष्टो ददाति असागारिकं च स्थानं भवेत्तदा गृह्यते १०-११।

तथा गलत्कुष्ठाद् गृह्यमाणे [2]तदीयोच्छ्वास-त्वक्संस्पर्शा-ऽर्धपक्वरुधिर-स्वेद-मल-लालादिभिः साधोः कुष्ठसङ्क्रमो भवेत् । सोऽपि चेन्मण्डलप्रसूतिरूपकुष्ठाकीर्णकायः सन् सागारिकाभावे ददाति तर्हि ततः कल्पते न शेषकुष्ठिनः सागारिके वा पश्यति । [3]तत्र मण्डलानि–वृत्ताकारदद्रुविशेषरूपाणि, प्रसूतिः–नखविदारणेऽपि वेदनाया असंवेदनमिति १२ ।

---

१ छिन्नकर-चरणयोस्तुलना पिण्डनि. वृत्तिः ५८४ ॥
२ गलत्कुष्ठ-बद्धयोः तुलना–पिण्डविशुद्धिवृत्तिः पृ. ६० B ॥ ३ तुलना–पिण्डनि.वृत्तिः ६०० ॥

तथा करविषयकाष्ठमयबन्धनरूपेण [1]हस्ताण्डुना पादविषयलोहबन्धनरूपेण निगडेन च बद्धे दातरि-भिक्षां प्रयच्छति दुःखं तस्य स्यात् , तथा मूत्राद्युत्सर्गादौ च शौचकरणासम्भवात्ततो भिक्षाग्रहणे लोके जुगुप्सा, यथा अमी अशुचयो यदेतस्मादप्यशुचीभूताद्भिक्षामाददत इति, तथा पादबद्धश्चेदितश्चेतश्च पीडा-मन्तरेण गन्तुं शक्तस्ततस्तस्मादपि कल्पते इतरस्तु य इतश्चेतश्च गन्तुमशक्तः, स चेदुपविष्टः सन् ददाति न च कोऽपि तत्र सागारिको विद्यते तर्हि ततोऽपि कल्पते । हस्तबद्धस्तु भिक्षां दातुमपि न शक्नोतीति तत्र प्रतिषेध एव न भजना १३ ।

तथा पादुकयोः– [2]काष्ठमयोपानहोरारूढस्य भिक्षादानाय प्रचलतः कदाचिद् दुःस्थितत्वेन पतनं स्यात् । पादुकारूढोऽपि यद्यचलो भवति तदा कारणे कल्पते १४ ।

तथा [3]कण्डयन्त्या–उदूखले तण्डुलादिकं छटयन्त्या न गृह्यते । यत इयमुदूखलक्षिप्तशाल्यादिबीज-सङ्घट्टादि करोति । भिक्षादानात्पूर्वं भिक्षादानोत्तरकालं वा जलेन हस्तधावनात्पुरःकर्मदोषं पश्चात्कर्मदोषं वा विदध्यादित्यादयो दोषाः, अत्रापि कण्डयन्त्या कण्डनायोत्पाटितं मुशलं न च तस्मिन् मुशले किमपि [4]काञ्च्यां बीजं लग्नमस्ति अत्रान्तरे च समायातः साधुस्ततो यदि सा पतनाद्यनर्थरहिते गृहकोणादौ मुशलं स्थापयित्वा भिक्षां ददाति तदा कल्पते १५ ।

---

१ हत्थिदु० इति पिण्डनि. ५७३ । हस्तान्दुना इति तत्रैव वृत्तिः । ० हस्तान्दुकबद्धः इति पिण्ड वि. वृत्तिः पृ. ८९ B ॥
२ तुलना–पिण्डनि. वृत्तिः ५८४ । पिण्डविशुद्धिवृत्तिः पृ. ८६ B ॥ ३ कण्डू० मु. । तुलना–पिण्डविशुद्धिवृत्तिः ८६ ॥
४ "मुखदत्तलोहमयकुण्डलिकरूपायां काञ्च्याम्" इति पिण्डविशुद्धिवृत्तिः पृ. ९० A ॥

तथा पिंपन्ती—शिलायां तिला-ऽऽमलकादिप्रमृद्नन्ती [1]यदा भिक्षादानायोत्तिष्ठति तदा पिष्यमाण-तिलादिसत्काः काश्चिन्नखिकाः सचित्ता अपि हस्तादौ लगिताः सम्भवन्ति, ततो भिक्षादानाय हस्तादि-प्रस्फोटने भिक्षां वा ददत्या भिक्षासम्पर्कतस्तासां विराधना भवति । भिक्षां च दत्त्वा भिक्षावयवखरण्टितौ हस्तौ जलेन प्रक्षालयेत् ततोऽप्कायविराधना । एषाऽपि पेषणसमाप्तौ प्राशुकं वा पिंपन्ती यदि ददाति तदा कल्पते १६ ।

तथा भर्ज्जमाना [2]चुल्ल्यां कडिल्हकादौ चनकादिन् स्फोटयन्ती, तस्यां हि भिक्षां ददत्यां वेलाल-गनेन कडिल्हकक्षिप्तगोधूम-चनकादीनां दाहे सति प्रद्वेषादयो दोषाः स्युः । अत्रापि यत्सचित्तं गोधूमादिकं कडिल्हके क्षिप्तं तद्भ्रष्टोत्तारितम् अन्यच्च नाद्यापि करे गृह्णाति एतस्मिन्नन्तरे भिक्षाकृते साधु समागतः ततो यद्युत्थाय ददाति तदा कल्पते १७ ।

तथा कृन्तत्यां—यन्त्रेण रूतपोणिकां सूत्ररूपां कुर्वत्याम् , तथा [3]लोढयन्त्यां—लोढिन्यां कर्पासं कणकेन रूततया विदधत्याम् , तथा विक्षुवत्यां—रूतं कराभ्यां पौनःपुन्येन विरलं कुर्वत्याम् , तथा पिञ्जयन्त्यां—पिञ्जनेन रूतं [4]विरलं कुर्वत्यां न गृह्यते । देयलिप्तहस्तधावनरूपस्य पुरःकर्म-पश्चात्कर्मादे-

---

१ तुलना—पिण्डनिर्युक्तिवृत्तिः ५८८। पिण्डविशुद्धिवृत्तिः पृ. ९० A॥ २ तुलना-पिण्डविशुद्धिवृत्तिः पृ. ९०A॥ ३ 'लोठयति लोठिन्यां-' इति पिण्डविशुद्धिवृत्तिः ९०A। 'रुञ्चन्ति कार्पासं लोठिन्यां लोठयन्ति'—इति पिण्डनि. वृत्तिः पृ.१५८ A॥ ४ तुलना-''विकृणुते विकर्णयति वा रूतं कराभ्यां पौनःपुन्येन श्लक्ष्णयति ।'' इति पिण्डविशुद्धिवृत्तिः पृ. ९० A॥

दर्पस्य सम्भवात् कार्पासिकादिसचित्तसङ्घट्टसम्भवाच्चेति । इह च कर्तने यदि सूत्रस्य श्वेततातिशयोत्पादनाय शङ्खचूर्णेन हस्तौ न खरण्टयति, खरण्टने वा यदि जलेन न प्रक्षालयति तदा कल्पते । लोढनेऽपि यदि हस्ते धृतः कार्पासो न स्यात् कार्पासिकान् वा यदि उत्तिष्ठन्ती न घट्टयति तदा गृह्यते । विक्षुवत्यां पिञ्जयन्त्यां च यदि पश्चात्कर्म न भवति तदा कल्पते १८-२१ ।

तथा [1]दलयन्ती—घरट्टेन गोधूमादि चूर्णयन्ती, तस्यां हि ददत्यां घरट्टक्षिप्तबीजसङ्घट्टः हस्तधावने जलविराधना च । दलयन्त्यपि सचित्तमुद्गादिना दल्यमानेन सह घरट्टं मुक्तवती अत्रान्तरे च साधुरायातस्ततो यद्युत्तिष्ठति अचेतनं वा भृष्टं मुद्गादिकं दलयति तर्हि तद्धस्तात्कल्पते २२ ।

तथा विरोलयन्ती— [2]दध्यादि मथ्नन्ती, यदि तद्दध्यादि संसक्तं मथ्नाति तर्हि तेन संसक्तदध्यादिना लिप्तकरत्वाद्भिक्षां ददती तेषां रसजीवानां वधं विदध्यात् । अत्रापि चेदसंसक्तं दध्यादि मथ्नाति तदा कल्पते २३ ।

तथा भुञ्जाना दात्री भिक्षादानार्थमाचमनं करोति, आचमने च क्रियमाणे उदकं विराध्यते । अथ न करोत्याचमनं तर्हि लोके जुगुप्सा । उक्तं च—

△"छक्कायदयावंतोऽवि संजओ दुल्लहं कुणइ बोहिं । आहारे नीहारे दुगुंछिए पिंडगहणे य ॥१॥"२४ ।



---

१ 'मृदु'-इति पिण्डविशुद्धिवृत्तौ पृ. १० A ॥ २ विरोलयन्ती-भुञ्जानयोः तुलना-पिण्डनि. वृत्तिः ५८७ । पिण्डविशुद्धिवृत्तिः प १० B ॥

△ षट्कायदयावानपि संयतो दुर्लभां करोति बोधिम् । आहारे नीहारे जुगुप्सिते पिण्डग्रहणे च ॥१॥

तथा [1]आपन्नसत्त्वायां भिक्षां ददत्यां न ग्राह्यम् , यतस्तस्या भिक्षादानार्थमूर्द्ध्वीभवन्त्या भिक्षां दत्त्वा आसने उपविशन्त्याश्च गर्भबाधा भवेत् । तत्रापि स्थविरकल्पिकानां मासाष्टकं यावत् तत्करेण कल्पते वेलामासे तु न कल्पते । ऊर्द्ध्वीभवनाद्यायासमन्तरेण स्वभावस्थितयैव तया यदि दीयते तदा वेलामासेऽपि गृह्यते २५ ।

तथा बालवत्सा बालकं भूमौ मञ्चिकादौ वा निक्षिप्य यदि भिक्षां ददाति तर्हि तं बालकं मार्जारसारमेयादयो मांसखण्डं शशकशिशुरिति वा कृत्वा विनाशयेयुः । तथा आहारखरण्टितौ शुष्कौ हस्तौ कर्कशौ भवतः; ततो भिक्षां दत्त्वा पुनर्दात्र्या हस्ताभ्यां गृह्यमाणस्य बालस्य पीडा स्यात् । यस्यास्तु बाल आहारेऽपि लगति भूमौ च मुक्तः सन्न रोदिति तस्या हस्तात्कल्पते स्थविरकल्पिकानाम् , आहारं हि गृह्णन् बालः प्रायः शरीरेण महान् भवेत् , ततो न मार्जारादिविराधनाप्रसङ्गः । ये तु भगवन्तो जिनकल्पिकास्ते निरपवादत्वात्सूत्रबलेन गर्भाधानादि ज्ञात्वा मूलत एवापन्नसत्त्वां बालवत्सां च सर्वथा परिहरन्ति २६ ।

तथा [2]षट्कायान् पृथिव्यप्तेजो वायु-वनस्पति-त्रसस्वरूपान् संघट्टयन्ती—हस्तपादादिना शरीरावयवेन स्पृशन्ती, ततः सजीवलवणोदका-ग्निवायुपूरितबस्ति-बीजपूरफलादि-मत्स्यादीन् हस्तस्थान् , सिद्धार्थक-दूर्वा-पल्लव-मल्लिका-शतपत्रिकाप्रमुखपुष्पाणि शिरःस्थानि, मालतीमालादीन्युरःस्थानि, जपाकुसुमान्याभरणतया

१ आपन्नसत्वा- बालवत्सयोः तुलना-पिण्डनि.वृत्तिः ५८६ । पिण्डविशुद्धिवृत्तिः प.९० B ॥
२ तुलनार्थं मतान्तरदर्शनार्थञ्च द्रष्टव्या सटीका पिण्डनिर्युक्तिः ५८१-५९२ । तुलना- पिण्डविशुद्धिवृत्तिः ८७ ॥

कर्णस्थानि, परिधानाद्यन्तःस्थापितसरससवृन्त-ताम्बूलपत्रादीनि [1]कटीस्थानि, सचित्तजलकणादीनि पाद-लग्नानि धारयन्ती यदि ददाति तदा न कल्पते, सङ्घट्टादिदोषसद्भावात् २७ ।

तथा तानेव षट्कायान् पृथिव्यादीन् विनाशयन्ती—व्यापादयन्ती, [2]तत्र कुश्यादिना भूम्यादिखनने पृथिवीकायम्, मज्जन-वस्त्रादिधावन-वृक्षादिसेचनादिभिरप्कायम्, उल्मुकघट्टनादिभिरग्निकायम्, चुल्यामग्निफूत्करणादिभिः सचित्तवातभृतवस्त्यादेरितस्ततः प्रक्षेपणेन वा वायुकायम्, चिर्भटिकादिच्छेदनेन वनस्पतिकायम्, मत्स्यादेर्मत्कुणादिपातनेन च त्रसकायं विनाशयन्त्यां दात्र्यां न गृह्यते २८ ।

तथा सप्रत्यपाया—सम्भाव्यमानापाया । इह [3]अपायास्त्रिविधाः, तद्यथा—तिर्यगूर्ध्वमधश्च, तत्र तिर्यग्गवादिभ्यः, ऊर्ध्वमुत्तरङ्गकाष्ठादेः, अधः सर्प-कण्टकादेः । इत्थं च त्रिविधानामप्यपायानामन्यतममपायं बुद्ध्या सम्भावयन् न ततो भिक्षां गृह्णीयादिति । [4]अत्र च षट् कायान् सङ्घट्टयन्त्यां तथा तानेव विनाशयन्त्यां सप्रत्यपायायां चापवादो नास्ति, ततः सर्वथा न कल्पते एव । शेषेषु पुनरपवादो दर्शित एव २९ ।

एवमन्येऽपि दायकदोषाः स्वयं शास्त्रान्तरतश्च परिभाव्य परिहरणीयाः ६ ॥

'उम्मीसे' त्ति उन्मिश्रं—सचित्तसम्मिश्रम्, इह कश्चिद् गृहस्थः केवलं वस्त्विदं व्रतिने [5]वितीर्यमाणमल्पं स्यादिति लज्जया, पृथग्वस्तुद्वयदाने वेला लगतीत्यौत्सुक्येन, मीलितं वस्तुद्वयं मृष्टं भवतीति

---

१ "शरीरस्थानि"—इति पिण्डविशुद्धिवृत्तौ प. ६१ A गाथा ८७ ॥ २ तुलना—पिण्डनि. वृत्तिः प. १६१ B । पिण्डविशुद्धिवृत्तिः ८७ ॥ ३ तुलना—पिण्डनि. वृत्तिः ५६५ ॥ ४ द्रष्टव्या-पिण्डनि. वृत्ति; ५७८ ॥ ५ तुलना-पिण्डविशुद्धिवृत्तिः ८६ ॥

भक्त्या, सचित्तभक्षणभङ्गो भवतु एतेषामिति प्रत्यनीकतया, अनाभोगेन वा साधूनां कल्पनीयतया उचितं पूरणादिकम् अकल्पनीयतया मुनीनामनुचितेन करमर्दक-दाडिमकुलिकादिना मिश्रयित्वा यद्ददाति तदुन्मिश्रम्, अत्र च कल्पनीयाऽकल्पनीये द्वे अपि वस्तुनी च मिश्रयित्वा यद्ददाति तदुन्मिश्रम्, [1]संहरणं तु यद्भाजनस्थमदेयं वस्तु तदन्यत्र क्वापि स्थगनिकादौ संहृत्य ददातीत्ययं मिश्र-संहृतयोर्भेदः ७ ॥

'अपरिणय' त्ति [2]अपरिणतम्–अप्रासुकीभूतम्, तत्सामान्यतस्तावद् द्विधा–द्रव्यतो भावतश्च, पुनरेकैकं द्विधा–दातृविषयं ग्रहीतृविषयं च, तत्र द्रव्यरूपमपरिणतं यत्पृथिवीकायादिकं स्वरूपेण सजीवम्, यत्पुनर्जीवेन विप्रमुक्तं तत्परिणतमिति । तच्च यदा दातुः सत्तायां वर्तते तदा दातृविषयम्, यदा तु ग्रहीतुः सत्तायां तदा ग्रहीतृविषयम्, तथा द्वयोर्बहूनां वा साधारणे देयवस्तुनि यद्येकस्य कस्यचिद्ददामीत्येवं भावः परिणमति न शेषाणाम्, एतद्भावतो दातृविषयमपरिणतम्, साधारणानिसृष्टं दायकपरोक्षत्वे दातृभावापरिणतं तु दायकसमक्षत्वे इत्यनयोर्भेदः । तथा द्वयोः साध्वोः सङ्घाटकरूपेण भिक्षाकृते गृहिगृहं गतयोरेकस्य साधोरेतल्लभ्यमानमशनादिकं शुद्धमिति मनसि परिणतं न द्वितीयस्येति ग्रहीतृविषयं भावापरिणतम्, एतच्चसाधूनां न कल्पते, शङ्कितत्वात् कलहादिदोषसम्भावच्च ८ ॥

'लित्त' त्ति हस्तमात्रकादिलेपकारित्वाल्लिप्तं–दुग्ध-दधि-तेमनादि, तत्पुनरुत्सर्गतः साधुभिर्न ग्राह्यम्, [3]रसाभ्यवहार-लाम्पट्यवृद्धिप्रसङ्गात्, दध्यादिलिप्तहस्तप्रक्षालनादिरूपपश्चात्कर्माद्यनेकदोषसद्भावाच्च ।

---

१ तुलना-पिण्डनि.वृत्तिः ६०७। पिण्डविशुद्धिवृत्तिः पृ. १२ A ॥ २ तुलना-सटीका पिण्डविशुद्धिः ९० ॥
३ तुलना-पिण्डनि. वृत्तिः ६१३ ॥

किन्तु अलेपकृदेव वल्ल-चनकौदनादिकम्, तथाविधशक्त्यभावे च निरन्तरस्वाध्यायाध्ययनादिकं किमपि पुष्टं कारणमाश्रित्य लेपकृदपि कल्पते ।

तत्र च लेपकृति गृह्यमाणे [1]दातुः सम्बन्धी हस्तः संसृष्टोऽसंसृष्टो वा भवति । येन च कृत्वा भिक्षां ददाति तदपि मात्रकं करोटिकादिकं संसृष्टमसंसृष्टं वा । द्रव्यमपि देयं सावशेषं निरवशेषं वा । एतेषां च त्रयाणां पदानां संसृष्ट[2]हस्त-संसृष्टमात्र-सावशेषद्रव्यरूपाणां सप्रतिपक्षाणां परस्परं योगतोऽष्टौ भङ्गा भवन्ति । ते चामी-संसृष्टो हस्तः संसृष्टं मात्रम्, सावशेषं द्रव्यम् १, संसृष्टो हस्तः, संसृष्टं मात्रम्, निरवशेषं द्रव्यम् २, संसृष्टो हस्तोऽसंसृष्टं मात्रम्, सावशेषं द्रव्यम् ३, संसृष्टो हस्तोऽसंसृष्टं मात्रम्, निरवशेषं द्रव्यम् ४, असंसृष्टो हस्तः, संसृष्टं मात्रम्, सावशेषं द्रव्यम् ५, असंसृष्टो हस्तः, संसृष्टं मात्रम्, निरवशेषं द्रव्यम् ६, असंसृष्टो हस्तोऽसंसृष्टं मात्रम्, सावशेषं द्रव्यम् ७, असंसृष्टो हस्तोऽसंसृष्टं मात्रम्, निरवशेषं द्रव्यम् ८ । एतेषु चाष्टसु भङ्गेषु मध्ये विषमेषु भङ्गेषु— प्रथम-तृतीय-पञ्चम-सप्तमेषु ग्रहणं कर्तव्यम्, न समेषु—द्वितीय-चतुर्थ-षष्ठा-ऽष्टमरूपेषु । इयमत्र भावना—इह हस्तो मात्रं द्वे वा स्वयोगेन संसृष्टे वा भवेतामसंसृष्टे वा, न तद्वशेन पश्चात्कर्म सम्भवति, किं तर्हि ? द्रव्यवशेन, तथाहि—यत्र द्रव्यं सावशेषं तत्र तेन साध्वर्थं खरण्टितेऽपि न दात्री प्रक्षालयति भूयोऽपि परिवेषणसम्भवात् । यत्र तु निरवशेषं द्रव्यं तत्र साधुदानानन्तरं नियमतस्तद्द्रव्याधारस्थालीं हस्तं मात्रं वा प्रक्षालयति, ततो द्वितीयादिषु भङ्गेषु द्रव्ये निरवशेषे पश्चात्कर्मसम्भवान्न कल्पते । प्रथमादिषु तु पश्चात्कर्मासम्भवात्कल्पत इति ९ ॥



१ तुलना-पिण्डनि. वृत्तिः ६२६ । पिण्डविशुद्धिवृत्तिः ९१ ॥ २ हस्ता० मु. । 'हस्त० इति पिण्डनि. वृत्तावपि पाठः ६२६ ॥

'छड्डिय' त्ति, [1]छर्दितम् उज्झितं त्यक्तमिति पर्यायाः, तच्च त्रिधा–सचित्तमचित्तं मिश्रं च; तदपि च कदाचिच्छर्दितं सचित्तमध्ये कदाचिदचित्तमध्ये कदाचिन्मिश्रमध्ये, तत्र उभयत्रापि मिश्रस्य सचित्त एवान्तर्भावात् छर्दने सचित्ता-ऽचित्तद्रव्ययोराधारभूतयोराधेयभूतयोश्च संयोगतश्चतुर्भङ्गी भवति । तद्यथा–सचित्ते सचित्तम्, अचित्ते सचित्तम्, सचित्ते अचित्तम्, अचित्ते अचित्तम्; अत्र चाद्येषु त्रिषु भङ्गेषु सचित्त सङ्घट्टादिदोषसद्भावान्न कल्पते, चरमे पुनः परिशाटिसद्भावात् । परिशाटौ च महान् दोषः, तथाहि–उष्णस्य द्रव्यस्य छर्दने भिक्षां ददमानो दह्येत, भूम्याश्रितानां वा पृथिव्यादीनां दाहः स्यात्, शीतद्रव्यस्य च भूमौ पतने भूम्याश्रिताः पृथिव्यादयो विराध्यन्ते [2]इति १० ॥

एते दश एषणादोषा भवन्ति, उक्तास्तावत्सङ्क्षेपतो द्विचत्वारिंशदपि दोषाः, विस्तरतस्तु पिण्डनिर्युक्तेरवगन्तव्याः ॥५६८॥

अथ पिण्डविशुद्धेः सर्वसंग्रहमाह —

**पिंडेसणा य सव्वा संखित्तोयरइ नवसु कोडीसु ।**
**न हणइ न किणइ न पयइ कारावण [3]अणुमईहिं नव ॥५६९॥**

**'पिंडेसणा य गाहा'** पिण्डैषणा–पिण्डविशुद्धिः सर्वाऽपि सङ्क्षिप्ता–संक्षेपेण भण्यमाना अवतरति–अन्तर्भवति नवसु कोटीषु–विभागेषु, ता एवाह–न स्वयं हन्ति, न च क्रीणाति, न च पचति इति त्रयम्,

१ तुलना–पिण्डनिर्युक्तिवृत्तिः ६२७-६२८ । द्रष्टव्या-सटीका पिण्डविशुद्धिः ९२ ॥ २ इति-नास्ति सं. ॥ ३ अणुमईहि-मु. । अणुमइणं हिं–ता. ॥

एवं कारणा-ऽनुमतिभ्यामपि । तथा नान्येन घातयति, न क्रापयति, न च पाचयति, तथा नापरेण हन्यमानं न क्रीयमाणं न च पच्यमानमनुमोदते । मिलिताश्चैता नव कोटयः । एतैर्नवभिः पदैः पिण्डविशुद्धिः सर्वाऽपि सङ्गृह्यत इति भावः ॥५६९॥

इह च पूर्वं षोडशविध उद्गम उक्तः, स च सामान्यतो द्विधा भवति, तद्यथा—विशोधिकोटिरूपोऽविशोधिकोटिरूपश्च, तत्र यद्दोपदुष्टे भक्ते तावन्मात्रेऽपनीते सति शेषं कल्पते, स दोषो विशोधिकोटिः, शेषस्त्वविशोधिकोटिः, तत्र ये दोषा अविशोधिकोटिरूपा ये च विशोधिकोटिरूपास्तानाह—

**कम्मुद्देसिय[1]चरिमे तिग पूइयमीसचरिमपाहुडिया ।**
**अज्झोयर अविसोही विसोहिकोडी भवे सेसा ॥५७०॥**

'**कम्मुद्देसियगाहा**' सूचामात्रत्वात्सूत्रस्य '**कम्म**'त्ति आधाकर्म सप्रभेदम्, औद्देशिकस्य विभागौद्देशिकस्य चरमत्रिकं—कर्मभेदसत्कमन्त्यमेव भेदत्रयम्, पूतिभक्तपानरूपा, '**मीस**' त्ति मिश्रजातं पाखण्डिगृहिमिश्रं साधुगृहिमिश्रम्, चरमा—अन्त्या बादरेत्यर्थः प्राभृतिका, '**अज्झोयर**'त्ति अध्यवपूरकस्य स्वगृहिपाखण्डिमिश्र-स्वगृहिसाधुमिश्ररूपमन्त्यं भेदद्वयम्, एते उद्गमदोषा अविशोधिकोटिः, अस्याश्चाविशोधिकोट्या अवयवेन शुष्कसिक्थादिना तथा तक्रादिना लेपेन, वल्लचणकादिना च अलेपेन संसृष्टं यत् शुद्धं भक्तं तस्मिन्नुज्झितेऽपि यदकृतकल्पत्रये पात्रे शुद्धमपि भक्तं पश्चात्परिगृह्यते तत्पूतिरवगन्तव्यम् । '**विसोहिकोडी भवे [2]सेस**'त्ति शेषाः—ओघौद्देशिकं नवविधमपि च विभागौद्देशिकमुपकरणपूतिर्मिश्रस्याद्यो भेदः, स्थापना,



---

१ चरमतिय पूइयं-ता. ॥ २ सेसत्ति शेषे विभागौ० सं. ॥

मालापहृतमाच्छे-द्यमनिसृष्टमध्यवपूरकस्याद्यो भेदश्चेत्येवंरूपा विशोधिकोटिः, सूक्ष्मप्राभृतिका, प्रादुष्करणम्, क्रीतम्, प्रामित्यकम्, परिवर्तितमभ्याहृतमुद्भिन्नम्, विशुद्ध्यति शेषं शुद्धं भक्तं यस्मिन्नुद्धृते यद्वा विशुद्ध्यति पात्रकमकृतकल्पत्रयमपि यस्मिन्नुज्झिते सा विशोधिः, सा चासौ कोटिश्च—भेदश्च विशोधि-कोटिः। उक्तं च—

△ "उद्देसियंमि नवगं उवगरणे जं च पूइयं होइ। जावंतियमीसगयं अज्झोयरए य पढमपयं ॥१॥
परियट्टिए अभिहडे उब्भिन्ने मालोहडे इय। अच्छिज्जे अणिसट्ठे पाओयर कीय पामिच्चे ॥२॥
सुहुमापाहुडियाऽविय ठवियगपिंडो य जो भवे दुविहो। सव्वोऽवि एस रासी विसोहिकोडी मुणेयव्वो ॥३॥"

इह च भिक्षामटता पूर्वं पात्रे शुद्धं भक्तं गृहीतम्, ततस्तत्रैवानाभोगादिकारणवशतो विशोधिकोटिदोषदुष्टं गृहीतम्, पश्चाच्च कथमपि ज्ञातं यथैतद्विशोधिकोटिदोषदुष्टं मया गृहीतमिति ततो यदि तेन विनाऽपि निर्वहति तर्हि सकलमपि तद्विधिनाऽऽहारादि परिष्ठापयति, अथ न निर्वहति तदा यदेव विशोधिकोटिदोष-दुष्टं तदेव तावन्मात्रं सम्यक्परिज्ञाय परित्यजति। यदि पुनरलक्षितेन सदृशवर्णगन्धादितया पृथक्परिज्ञा-तुमशक्येन मिश्रितं भवति, यद्वा द्रवेण तक्रादि तदा सर्वस्यापि तस्य विवेकः, कृते च सर्वात्मना विवेके

---

△ औद्देशिके नवकमाद्यमुपकरणे यच्च पूतिकं भवति। यावदर्थिकं मिश्रगतम् अध्यवपूरके च प्रथमपदम् ॥१॥
परिवर्त्तितम् अभ्याहृतम् उद्भिन्नं मालापहृतं च। आच्छेद्यमनिसृष्टं प्रादुष्करणमपमित्यं क्रीतम् ॥२॥
सूक्ष्मा प्राभृतिका स्थापनापिण्डश्च यो भवेत् द्विविधः। सर्वोऽप्येष राशिर्विशोधिकोटी ज्ञातव्यः ॥३॥

यद्यपि केचित्सूक्ष्मा अवयवा लगिता भवन्ति तथापि तत्र पात्रेऽकृतकल्पेऽप्यन्यत्परिगृह्णन् शुद्धः [1]साधुः त्यक्तभक्तादेर्विशोधिकोटित्वादिति ॥५७०॥

अथ समितीराह—

**इरिया १ भासा २ एसण ३ [2]आयाणाईसु ४ तह परिट्ठवणा ५ ।**
**सम्मं जा उ पवित्ती सा समिई पंचहा एवं ॥५७१॥**

६७ द्वारे करण-सप्ततौ समितयः गाथा ५७१ प्र.आ. १५६

'इरिया गाहा' 'ईरणमीर्या–गतिः, भाषणं–भाषा, एषणमेषणा, आदीयते–गृह्यते इत्यादानम् , तदादिर्येषां निक्षेपादिक्रियाविशेषाणां ते आदानादयः, ईर्या च भाषा च एषणा च आदानादयश्च ते तथा [तेषु], परिष्ठापने–त्यजने सम्यगागमानुसारेण या प्रवृत्तिः–चेष्टा सा समितिः, पञ्चानां चेष्टानां तान्त्रिकीयं संज्ञा, तत ईर्यासमितिर्भाषासमितिरेषणासमितिरादाननिक्षेपसमितिः परिष्ठापनासमितिरित्येवमुक्तन्यायेन [3]पञ्चप्रकारा समितिः ।

तत्र [4]त्रस-स्थावरजन्तुजाताभयदानदीक्षितस्य यतेरावश्यके प्रयोजने लोकैरत्यन्तक्षुण्णेषु रविरश्मिप्रतापितेषु प्रासुकविविक्तेषु मार्गेषु गच्छतो जन्तुरक्षानिमित्तं स्वशरीररक्षानिमित्तं च पादाग्रादारभ्य युगमात्रक्षेत्रं यावन्निरीक्ष्य या ईर्या–गतिस्तस्यां समितिरीर्यासमितिः, यदुक्तम्—

१ साधुरुपस्ता—सं. ॥ २ आयाराईसु-ता. ॥ ३ तुलना–तत्त्वार्थ० सिद्ध० ९ / ४-५ । तत्त्वार्थ० राज० ९ / ४-५ । योगशास्त्रटीका १ । ३४ । धर्मसं. वृ. ३। ४७ ॥ ४–तुलना योगशास्त्र टीका १ । ३६ । धर्मसं. वृ. पृ. १३० तः ॥

